# अथ बौधायनधर्मसूत्रम्

उपदिष्टो धर्मः प्रतिवेदम् १ तस्यानु व्याख्यास्यामः २ स्मार्तो द्वितीयः ३ तृतीयः शिष्टागमः ४ शिष्टाः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्याअलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः ५ धर्मेणा-धिगतो येषां वेदः सपरिबृंहणः ६-१ शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्य-क्षहेतवः । इति ६-२ तदभावे दशावरा परिषत् ७ अथाप्युदाहरन्ति ८-१ चातुर्वैद्यं विकल्पी च अङ्गविद्धर्मपाठकः ८-२ आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा ९-१ पञ्च वा स्युस्त्रयो वा स्युरेको वा स्या-दनिन्दितः ९-२ प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्त्रशः १०-१ यथा दारुमयो हस्ती यथा चर्ममयो मृगः १०-२ ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ११-१ यद्वदन्ति तमोमूढा मूर्खा धर्ममजानतः ११-२ तत्पापं शतधा भूत्वा वक्तॄन्समधिगच्छति १२-१ बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः १२-२ तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये १३-१ धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः १३-२ क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः १४-१ यथाश्मनि स्थितं तोयं मारुतार्कौ प्रणाशयेत् १४-२ तद्वत्कर्तरि यत्पापं जलवत्संप्रलीयते १५-१ शरीरं बलमायुश्च वयः कालं च कर्म च १५-२ समीक्ष्य धर्मविद्बुद्ध्या प्रायश्चित्तानि निर्दिशेत् १६-१ अव्रतानाममन्त्राणां जातिमात्रोपजी-विनाम् १६-२ सहस्त्रशः समेतानां परिषत्त्वं न विद्यते । इति १७ १

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः १ यानि दक्षिणतस्तानि व्या-ख्यास्यामः २ यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनंप-र्युषितभोजनं मातुलपितृस्वसृदुहितृगमनमिति ३ अथोत्तरत ऊर्णावि-क्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रसंयानमिति ४ इतरदितरस्मिन्कुर्वन्दुष्यतीतरदितरस्मिन् ५ तत्र तत्र देशप्रामाण्यमेव स्यात् ६ मिथ्याऐतदिति गौतमः ७ उभयं चैव । नाद्रियेत शिष्ट-

स्मृतिविरोधदर्शनात् ८ प्रागादर्शात्प्रत्यक् कनखलाद्दक्षिणेनहि-मवन्तमुदक् पारियात्रमेतदार्यावर्तम् । तस्मिन्य आचारः सप्रमाणम् ९ गङ्गायमुनयोरन्तरमित्येके १० अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति ११ पश्चात्सिन्धुर्विधरणी सूर्यस्योदयनं पुरः १२-१ यावत्कृष्णा विधा-वन्ति तावद्धि ब्रह्मवर्चसम् । इति १३-१ अवन्तयोऽङ्गमगधाः सुराष्ट्रा दक्षिणापथाः १३-२ उपावृत्सिन्धुसौवीरा एते संकीर्णयोनयः १४-१ आरट्टान्कारस्करान्पुण्ड्रान्सौवीरान्वङ्गान्कलिङ्गान्प्रानूनानिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया वा १४-२ अथाप्युदाहरन्ति १५-१ पद्भ्यां स कुरुते पापं यः कलिङ्गान्प्रपद्यते १५-२ ऋषयो निष्कृतिं तस्य प्रा-हुर्वैश्वानरं हविः १६-१ बहूनामपि दोषाणां कृतानां दोषनिर्णये १६-२ पवित्रेष्टिं प्रशंसन्ति सा हि पावनमुत्तमम् । इति १७-१ अथाप्युदाहरन्ति १७-२ वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च १८-१ ऋतावृतौ प्रयुञ्जानः पापेभ्यो विप्रमुच्यते । पापेभ्योविप्रमुच्यत इति १८-२ २

अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् १ चतुर्विंशतिं द्वादश वा प्रत्य्वेदम् २ संवत्सरावमं वा प्रतिकाण्डम् ३ ग्रहणान्तं वा जीवित-स्यास्थिरत्वात् ४ कृष्णकेशोऽग्नीनादधीतेति श्रुतिः ४ नास्य कर्म नियच्छन्ति किंचिदा मौञ्ज्य्बन्धनात् ५ वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते । इति ६ गर्भादिः संख्या वर्षाणाम् । तदष्टमेषु ब्राह्मण-मुपनयीत ७ त्र्यधिकेषु राजन्यम् ८ तस्मादेकाधिकेषु वैश्यम् ९ वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण १० गायत्रीत्रिष्टुब्जगतीभि-र्यथाक्रमम् ११ आ षोडशादा द्वाविंशादा चतुर्विंशादनात्यय एषां क्रमे-ण १२ मौञ्जी धनुर्ज्या शाणीति मेखलाः १३ कृष्णरुरुबस्ताजिनान्य-जिनानि १४ मूर्धललाटनासाग्रप्रमाणा याज्ञिकस्य वृक्षस्य दण्डाः १५ भवत्पूर्वां भिक्षामध्यां याच्आन्तां भिक्षां चरेत्सप्ताक्षरां क्षां च हिं च न वर्धयेत् १६ भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्योभवदन्तां वैश्यः सर्वेषु वर्णेषु १७ ते ब्राह्मणाद्याः स्वकर्मस्थाः १८ सदाऽरण्या-

त्समिध स्राहृत्यादध्यात् १९ सत्यवादी ह्रीमाननहंकारः २० पूर्वोत्था-यी जघन्यसंवेशी २१ सर्वत्राप्रतिहतगुरुवाक्योऽन्यत्र पातकात् २२ यावदर्थसंभाषी स्त्रीभिः २३ नृत्तगीतवादित्रगन्धमाल्योपानच्छत्रधार-णाञ्जनाभ्यञ्जनवर्जी २४ दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंगृह्णीयात् २५ दीर्घमायुः स्वर्गं चेप्सन्काममन्यस्मै साधुवृत्तायगुरुणानुज्ञातः २६ स्रसावहं भो इति श्रोत्रे संस्पृश्य मनःसमाधानार्थम् २७ स्रधस्ताज् जान्वोरा पद्भ्याम् २८ नासीनो नासीनाय न शयानो न शयानाय नाप्रय-तोनाप्रयताय २९ शक्तिविषये मुहूर्तमपि नाप्रयतः स्यात् ३० समिद्धा-र्युदकुम्भपुष्पान्नहस्तो नाभिवादयेद्यच्चान्यदप्येवंयुक्तम् ३१ न समवाये-ऽभिवादयेदत्यन्तशः ३२ भ्रातृपत्नीनां युवतीनां च गुरुप्त्नीनां जातवीर्यः ३३ नौशिलाफलककुञ्जरप्रासादकटेषु चक्रवत्सु चादोषम्सहासनम् ३४ प्रसाधनोत्सादनस्नापनोच्छिष्टबोजनानीति गुरोः ३५ उच्छिष्टव-र्जनं तत्पुत्रेऽनूचाने वा ३६ प्रसाधनोत्सादनस्नापनवर्जनं च तत्पत्न्याम् ३७ धावन्तमनुधावेद्गच्छन्तमनुगच्छेत्तिष्ठन्तमनुतिष्ठेत् ३८ नाप्सु श्लाघमानः स्नायात् ३९ दण्ड इव प्लवेत् ४० स्रब्राह्मणादध्यय-नमापदि ४१ शुश्रूषानुव्रज्या च यावदध्ययनम् ४२ तयोस्तदेव पावनम् ४३ भ्रातृपुत्रशिष्येषु चैवम् ४४ ऋत्विक्श्वशुरपितृव्यमातुलानां तु यवीयसांप्रत्युत्थायाभिभाषणम् ४५ प्रत्यभिवाद इति कात्यः ४६ शिशावाङ्गिरसे दर्शनात् ४७ ३

१ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा १-१ विद्यया सह मर्तव्यं न चैनामूषरे वपेत् १-२ स्रग्निरिव कक्षं दहति ब्रह्म पृष्टमनादृतम् २-१ तस्माद्वै शक्यं न ब्रूयाद्ब्रह्म मानमकुर्वताम् । इति २-२ एवास्मै वचो वेदयन्ते ३ ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत् । सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति । यामेव रात्रिं समिधं नाहरातईति ४ तस्माद्ब्रह्मचारी यां रात्रिं समिधं नाहर-त्यायुषएव तामवदाय वसति । तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायु-षोऽवदाय वसानीति ५ दीर्गसत्त्रं वैष उपैति यो ब्रह्मचर्यमुपैति । स

यामुपयन्समिधमादधाति सा प्रायणीयाथ यां स्नास्यन्सोदयनीयाथ या अन्तरेण सत्या एवास्य ताः ६ ब्राह्मणो वै ब्रह्मचर्यमुपयञ्चतुर्धा भूतानि-प्रविशत्यग्निं पदा मृत्युं पदाचार्यं पदात्मन्येवास्यचतुर्थः पादः परिशि-ष्यते ७-१ स यदग्नौ समिधमादधाति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ७-२ अथ यदात्मानं दरिद्रीक्रित्याह्रीर्भूत्वा भिक्षतेब्रह्मचर्यं चरति य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणातितं संस्कृत्यात्मन्धत्ते स एनमाविशति ७-३ अथ यदाचार्यवचः करोति य एवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ७-४ अथ यत्स्वाध्यायमधीते य एवास्यात्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्यात्मन्धत्ते स एनमाविशति ७-५ न ह वै स्नात्वा भिक्षेत । अपि ह वै स्नात्वा भिक्षांचरत्यपि ज्ञातीनामशनायापि पितॄणामन्याभ्यः क्रियाभ्यः ७-६ स यदन्यां भिक्षितव्यां न विन्देतापि स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरम् ७-७ नैनं सप्तम्यभिक्षितातीयात् ७-८ भेक्षस्याचरणे दोषः पावकस्यासमिन्धने ७-९-१ सप्तरात्रमकृत्वैतदवकीर्णव्रतं चरेत् ७-९-२ तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति ७-१० यथा ह वा अग्निः समिद्धो रोचत एवं ह वैष स्नात्वारोचते य एवं विद्वान्ब्रह्मचर्यं चरतीति ब्राह्मणम् । इतिब्राह्मणम् ८ ४

अथ स्नातकस्य १ अन्तर्वास उत्तरीयम् २ वैणवं दण्डं धारयेत् ३ सोदकं च कमण्डलुम् ४ द्व्य्यज्ञोपवीती ५ उष्णीषमजिनमुत्तरीय-मुपानहौ छत्रं चोपासनंदर्शपूर्णमासौ ६ पर्वसु च केशश्मश्रुलोम-नखवापनम् ७ तस्य वृत्तिः ८ ब्राह्मणराजन्यवैश्यरथकारेष्वामं लि-प्सेत ९ भेक्षं वा १० वाग्यतस्तिष्ठेत् ११ सर्वाणि चास्य देव-पितृसंयुक्तानि पाकयज्ञसंस्थानिभूतिकर्मानि कुर्वीतेति १२ एतेन वि-धिना प्रजापतेः परमेष्ठिनः परमर्षयः परमांकाष्ठां गच्छन्तीति बौधायनः १३ ५

अथ कमण्डलुचर्यामुपदिशन्ति १-१ छागस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे १-२ अप्सु चैव कुशस्तम्बे पावकः परिपठ्यते २-१ तस्माच्छौचं कृत्वा पाणिना परिमृजीत पर्यग्निकरणं हितदुद्दीप्यस्व जातवेद इति पुनर्दाहाद्विशिष्यते २-२ तत्रापि किंचित्संस्पृष्टं मनसि मन्येत कुशैर्वा तृणैर्वा प्रज्वाल्य प्रदक्षिणं परिदहनम् ३ अत ऊर्ध्वं श्ववायसप्रभृत्युपहतानामग्निवर्ण इत्युपदिशन्ति ४ मूत्रपुरीषलोहित-रेतःप्रभृत्युपहतानामुत्सर्गः ५ भग्ने कमण्डलौ व्याहृतिभिः शतं जुहुयाज् जपेद्वा ६ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्मपुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ७-१ कपालानि संहृत्याप्सु प्रक्षिप्य सावित्रीं दशावरांकृत्वा पुनरेवान्यं गृह्णीयात् ७-२ वरुणमाश्रित्य । एतत्ते वरुण पुनरेव मामोमिति । अक्षरं ध्यायेत् ८ शूद्राद्गृह्य शतं कुर्याद्वैश्यादर्धशतं स्मृतम् ९-१ क्षत्रियात्पञ्चविंशत्तु ब्राह्मणाद्दश कीर्तिताः ९-२ अस्तमित आदित्य उदकं गृह्णीयान्न गृह्णीयादितिमीमांसन्ते ब्रह्मवादिनः १० गृह्णीयादित्येतदपरम् ११ यावदुदकं गृह्णीयात्तावत्प्राणमायच्छेत् १२ अग्निर्ह वै ह्युदकं गृह्णाति १३ कमण्डलूदकेनाभिषिक्तपाणिपादो यावदार्द्रं तावदशुचिः परेषाम् । आत्मानमेव पूतम्करोति । नान्यत्कर्मकुर्वीतेति विज्ञायते १४ अपि वा प्रतिशौचमा मणिबन्धाच्छुचिरिति बौधायनः १५ अथाप्युदाहरन्ति १६ ६

कमण्डलुर्द्विजातीनां शौचार्थं विहितः पुरा १-१ ब्रह्मणा मुनिमुख्यैश्च तस्मात्तं धारयेत्सदा १-२ ततः शौचं ततः पानं संध्योपासनमेव च २-१ निर्विशङ्केन कर्तव्यं यदीच्छेच्छ्रेय आत्मनः २-२ कुर्याच्छुद्धेन मनसा न चित्तं दूषयेद्बुधः । सहकमण्डलुनोत्पन्नः स्वयंभूस्तस्मात्कमण्डलुना चरेत् ३-१ मूत्रपुरीषे कुर्वन्दक्षिणे हस्ते गृह्णाति सव्य आचमनीयम् । एतत्सिध्यति साधूनाम् ३-२ यथा हि सोमसंयोगाच् चमसो मेध्य उच्यते ४-१ अपां तथैव संयोगान्नित्यो मेध्यः कमण्डलुः ४-२ पितृदेवाग्निकार्येषु तस्मात्तं परिवर्जयेत् ५ तस्माद्विना कमण्डलुना नाध्वानं व्रजेन्न सीमन्तं नगृहाद्गृहम् ६ पदमपि न गच्छेदिषुमात्रादित्येके

७ यदिच्छेद्धर्मसंततिमिति बौधायनः ८ ऋग्विधेनेति वाग् वदति । ऋग्विधेनेति वाग् वदति ९ ७

अथातः शौचाधिष्ठानम् १-१ अद्भिः शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति १-२ अहिंसया च भूतात्मा मनः सत्येन शुध्यति । इति २ मनःशुद्धिरन्तःशौचम् ३ बहिःशौचं व्याख्यास्यामः ४ कौशं सौत्रं वा त्रिस्त्रिवृद्यज्ञोपवीतम् ५ आ नाभेः ६ दक्षिणं बाहुमुद्धृत्य सव्यमवधाय शिरोऽवदध्यात् ७ विपरीतं पितृभ्यः ८ कण्ठेऽवसक्तं निवीतम् ९ अधोऽवसक्तं अधोवीतम् १० प्राङ्मुख उदङ्मुखो वासीनः शौचमारभेत शुचौ देशेदक्षिणम्बाहुं जान्वन्तरा कृत्वा प्रक्षाल्य पादौ पाणी चामणिबन्धात् ११ पादप्रक्षालनोच्छेषणेन नाचामेत् १२ यद्याचामेद्भूमौ स्रावयित्वाचामेत् १३ ब्राह्मेण तीर्थेनाचामेत् १४ अङ्गुष्ठमूलं ब्राह्मं तीर्थम् १५ अङ्गुष्ठाग्रं पित्र्यमङ्गुल्यग्रं दैवमङ्गुलिमूलमार्षम् १६ नाङ्गुलीभिर्न सबुद्बुदाभिर्न सफेनाभिर्नोष्णाभिर्न क्षाराभिर्न लवणाभिर्न कलुषाभिर्न विवर्णाभिर्नदुर्गन्धिरसाभिः १७ न हसन्न जल्पन्न तिष्ठन्न विलोकयन्न प्रह्वो न प्रणतोन मुक्तशिखो न प्रावृतकण्ठो न वेष्टितशिरा न त्वरमाणोनायज्ञोपवीती न प्रसारितपादो न बद्धकक्ष्यो न बहिर्जानुःशब्दमकुर्वन् १८ त्रिरपो हृदयंगमाः पिबेत् १९ त्रिः परिमृजेत् २० द्विरित्येके २१ सकृदुभयं शूद्रस्य स्त्रियाश्च २२ अथाप्युदाहरन्ति २३-१ गताभिर्हृदयं विप्रः कण्ठ्याभिः क्षत्रियः शुचिः २३-२ वैश्योऽद्भिः प्राशिताभिः स्यात्स्त्रीशूद्रौ स्पृश्यचान्ततः । इति २४-१ दन्तवद्दन्तसक्तेषु दन्तवत्तेषु धारणात् २४-२ स्रस्तेषु तेषु नाचामेत्तेषां संस्राववच्छुचिः । इति २५-१ अथाप्युदाहरन्ति २५-२ दन्तवद्दन्तलग्नेषु यच् चाप्यन्तर्मुखे भवेत् २६-१ आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः । इति २६-२ खान्यद्भिः संस्पृश्य पादौ नाभिं शिरः सव्यं पाणिमन्ततः २७-१ तैजसं चेदादायोच्छिष्टी स्यात्तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत् २७-२ अथ चेदन्नेनोच्छिष्टी स्यात्तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत् २८ अथ चेदद्भिरुच्छिष्टी स्यात्तदुदस्याचम्यादा-

स्यन्नद्भिः प्रोक्षेत् २९ एतदेव विपरीतममत्रे ३० वानस्पत्ये विकल्पः ३१ तैजसानामुच्छिष्टानां गोशकृन्मृद्भस्मभिः परिमार्जनमन्यतमेन वा ३२ ताम्ररजतसुवर्णानामम्लैः ३३ अमत्राणां दहनम् ३४ दारवाणां तक्षणम् ३५ वैणवानां गोमयेन ३६ फलमयानां गोवालरज्ज्वा ३७ कृष्णाजिनानां बिल्वतण्डुलैः ३८ कुतपानामरिष्टैः ३९ और्णानामादित्येन ४० क्षौमाणां गौरसर्षपकल्केन ४१ मृदा चेलानाम् ४२ चेलवच् चर्मणाम् ४३ तैजसवदुपलमणीनाम् ४४ दारुवदस्थ्नाम् ४५ क्षौमवच्छङ्खशृङ्गशुक्तिदन्तानाम् ४६ पयसा वा ४७ चक्षुर्घ्राणानुकूल्याद्वामूत्रपुरीषासृक्शुक्रकुणपस्पृष्टानां पूर्वोक्तानामन्यतमेनत्रिःसप्तकृत्वः परिमार्जनम् ४८ अतैजसानामेवंभूतानामुत्सर्गः ४९ वचनाद्यज्ञे चमसपात्रानाम् ५० न सोमेनोच्छिष्टा भवन्तीति श्रुतिः ५१ कालोऽग्निर्मनसः शुद्धिरुदकाद्युपलेपनम् ५२-१ अविज्ञातं च भूताणां षड्विधं शौचमुच्यते । इति ५२-२ अथाप्युदाहरन्ति ५३-१ कालं देशं तथात्मानं द्रव्यं द्रव्यप्रयोजनमुपपत्तिमवस्थां च विज्ञाय शौचं शौचज्ञः कुशलो धर्मेप्सुःसमाचरेत् ५३-२ ८

नित्यं शुद्धः कारुहस्तः पण्यं यच् च प्रसारितम् १-१ ब्रह्मचार्यगतं भेक्षं नित्यं मेध्यमिति श्रुतिः १-२ वत्सः प्रस्नवने मेध्यः शकुनिः फलशातने २-१ स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः २-२ आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ३ अदूष्याः संतता धारा वातोद्धूताश्च रेणवः ४-१ अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः ४-२ तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ५-१ चैत्यवृक्षं चितिं यूपं चण्डालं वेदविक्रयम् ५-२ एतानि ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ६-१ आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ६-२ शुचीन्यात्मन एतानि परेषामशुचीनि तु ७-१ आसनं शयनं यानं नावः पथि तृणानि च ७-२ चण्डालपतितस्पृष्टं मारुतेनैव शुध्यति ८-१ खलक्षेत्रेषु यद्धान्यं कूपवापीषु यज् जलम् ८-२ अभोज्यादपि तद्भोज्यं यच् च गोष्ठगतं पयः ९-१ त्रीणि देवाः पवित्राणि ब्राह्म-

णानामकल्पयन् ९-२ अदृष्टमद्भिर्निर्णिक्तं यच् च वाचा प्रशस्यते १०-१ आपः पवित्रं भूमिगता गोतृप्तिर्यासु जायते १०-२ अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ११-१ भूमेस्तु संमार्जनप्रोक्षणोपलेपनावस्तरणोल्लेखनैर्यथास्थानं दोषविशेषात्प्रायत्यम् ११-२ अथाप्युदाहरन्ति १२
९

गोचर्ममात्रमब्बिन्दुर्भूमेः शुध्यति पातितः १-१ समूढमसमूढं वा यत्रामेध्यं न लक्ष्यते । इति १-२ परोक्षमधिश्रितस्यान्नस्यावद्योत्याभ्युक्षणम् २ तथापणेयानां च भक्षाणाम् ३ बीभत्सवः शुचिकामा हि देवा नाश्रद्दधानस्य हविर्जुषन्त इति ४-१ शुचेरश्रद्दधानस्य श्रद्धानस्य चाशुचेः ४-२ मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ५-१ प्रजापतिस्तु तानाह न समं विषमं हि तत् ५-२ हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यते । इति ६-१ अथाप्युदाहरन्ति ६-२ अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः ७-१ तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ७-२ इष्ट्वा दत्त्वापि वा मूर्खः स्वर्गं नहि स गच्छति ८-१ शङ्काविहतचारित्रो यः स्वाभिप्रायमाश्रितः ८-२ शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनात् । इति ९-१ शाकपुष्पफलमूलौषधीनां तु प्रक्षालनम् ९-२ शुष्कं तृणमयाज्ञिकं काष्ठं लोष्टं वातिरस्कृत्याहोरात्रयोरुदग्दक्षिणामुखः प्रवृत्य शिर उच्चरेदवमेहेद्वा १० मूत्रे मृदाद्भिः प्रक्षालनम् ११ त्रिः पाणेः १२ तद्वत्पुरीषे १३ पर्यायात्त्रिस्त्रिः पायोः पाणेश्च १४ मूत्रवद्रेतस उत्सर्गे १५ नीवीं विस्रस्य परिधायाप उपस्पृशेत् १६ आर्द्रं तृणं गोमयं भूमिं वा समुपस्पृशेत् १७ नाभेरधः स्पर्शनं कर्मयुक्तो वर्जयेत् १८ ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यमितिश्रुतिः १९ शूद्राणामार्याधिष्ठितानामर्धमासि मासि वा वपनमार्यवदाचमनकल्पः २० वैश्यः कुसीदमुपजीवेत् २१ पञ्चविंशतिस्त्वेव पञ्चमाषिकी स्यात् २२ अथाप्युदाहरन्ति २३-१ यः समर्घमृणं गृह्य महार्घं संप्रयोजयेत् २३-२ स वै वार्द्धुषिको नाम सर्वधर्मेषु गर्हितः २३-३ वृद्धिं च भ्रूणहत्यां च तुलया समतोलयत् २४-१ अतिष्ठ-

द्भ्रूणहा कोटयां वार्द्धुषिः समकम्पत । इति २४-२ गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् २४-३ प्रेष्यान्वार्द्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत् २५-१ कामं तु परिलुप्तकृत्याय कदर्याय नास्तिकाय पापीयसेपूर्वौ दद्याताम् २५-२ अयज्ञेनाविवाहेन वेदस्योत्सादनेन च २६ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च २७-१ ब्राह्मणातिक्रमो नास्ति मूर्खे मन्त्रविवर्जिते २७-२ ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते २८-१ गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया २८-२ कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः २९-१ मन्त्रतस्तु समृद्धानि कुलान्यल्पधनान्यपि २९-२ कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ३०-१ वेदः कृषिविनाशाय कृषिर्वेदविनाशिनी ३०-२ शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ३१-१ न वै देवान्पीवरोऽसंयतात्मा रोरूयमाणः ककुदीसमश्नुते ३१-२ चलत्तुन्दी रभसः कमवादी कृशास इत्यणवस्तत्रयान्ति ३२-१ यद्यौवने चरति विभ्रमेण सद्वाऽसद्वा यादृशं वायदा वा ३२-२ उत्तरे चेद्वयसि साधुवृत्तस्तदेवास्य भवतिनेतराणि ३३-१ शोचेत मनसा नित्यं दुष्कृतान्यनुचिन्तयन् ३३-२ तपस्वी चाप्रमादी च ततः पापात्प्रमुच्यते ३४-१ स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ३४-२ न तैरुच्छिष्टभावः स्यात्तुल्यास्ते भूमिगैः सह । इति ३५ १०

सपिण्डेष्वा दशाहमाशौचमिति जननमरणयोरधिकृत्यवदन्त्यृत्विग्दीक्षितब्रह्मचार्य्वर्जम् १ सपिण्डता त्वा सप्तमात्सपिण्डेषु २ आ सप्तमासादा दन्तजननाद्वोदकोपस्पर्शनम् ३ पिण्डोदकक्रिया प्रेते नात्रिवर्षे विधीयते ४-१ आ दन्तजननाद्वापि दहनं च न कारयेत् ४-२ अप्रत्तासु च कन्यासु ५ प्रत्तास्वेके ह कुर्वते ६ लोकसंग्रहणार्थं हि तदमन्त्राः स्त्रियो मताः ७ स्त्रीणामकृतविवाहानां त्र्यहाच्छुध्यन्ति बान्धवाः ८-१ यथोक्तेनैव कल्पेन शुध्यन्ति च सनाभय इति ८-२ अपि च प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरःसवर्णायाः पुत्रः पौत्रः प्रपौत्रस्तत्पुत्रवर्जं तेषां चपुत्रपौत्रमविभक्तदायं सपिण्डानाचक्षते ९

विभक्तदायानपि सकुल्यानाचक्षते १० असत्स्वन्येषु तद्गामी ह्यर्थो भव-
ति ११ सपिण्डाभावे सकुल्यः १२ तदभावे पिताचार्योऽन्तेवास्यृत्विग्
वा हरेत् १३ तदभावे राजा तत्स्वं त्रैविद्यवृद्धेभ्यः संप्रयच्छेत् १४ न
त्वेव कदा चित्स्वयं राजा ब्राह्मणस्वमाददीत १५-१ अथाप्युदाहरन्ति
१५-२ ब्रह्मस्वं पुत्रपौत्रघ्नं विषमेकाकिनं हरेत् १६-१ न विषं विषमि-
त्याहुर्ब्रह्मस्वं विषमुच्यते १६-२ तस्माद्राजा ब्राह्मणस्वं नाददीत ।
परमं ह्येतद्विषं यद्ब्राह्मणस्वमिति १६-३ जननमरणयोः संनिपाते समानो
दशरात्रः १७ अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमा
नवमाद्दिवसात् १८ जनने तावन्मातापित्रोर्दशाहमाशौचम् १९ मातु-
रित्येके तत्परिहरणात् २० पितुरित्यपरे शुक्रप्राधान्यात् २१ अयोनिजा
ह्यपि पुत्राः श्रूयन्ते २२ मातापित्रोरेव तु संसर्गसामान्यात् २३ मरणे
तु यथाबालं पुरस्कृत्य यज्ञोपवीतान्यपसव्यानिकृत्वा तीर्थमवतीर्य
सकृत्सकृत्त्रिर्निमज्ज्योन्मज्ज्योत्तीर्याचम्य तत्प्रत्ययमुदकमासिच्यात ए-
वोत्तीर्याचम्य गृहद्वार्यङ्गारमुद्कमिति संस्पृश्याक्षारलवणाशिनो दशाहं
कटमासीरन् २४ एकादश्यां द्वादश्यां वा श्राद्धकर्म २५ शेषक्रियायां
लोकोऽनुरोद्धव्यः २६ अत्राप्यसपिण्डेषु यथासन्नं त्रिरात्रमहोरात्रमेका-
हमिति कुर्वीत २७ आचार्योपाध्यायतत्पुत्रेषु त्रिरात्रम् २८ ऋत्विजां
च २९ शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत
३० गर्भस्रावे गर्भमाससंमिता रात्रयः स्त्रीणाम् ३१ परशवोपस्पर्शने-
ऽनभिसंधिपूर्वं सचेलोऽपःस्पृष्ट्वा सद्यः शुद्धो भवति ३२ अभिसंधिपूर्वं
त्रिरात्रम् ३३ ऋतुमत्यां च ३४ यस्ततो जायते सोऽभिशस्त इति व्या-
ख्यातान्यस्यैव्रतानि ३५ वेदविक्रयिणं यूपं पतितं चितिमेव च ३६
स्पृष्ट्वा समाचरेत्स्नानं वानं चण्डालमेव च ३७-१ ब्राह्मणस्य व्रणद्वारे
पूयशोणितसंभवे ३७-२ कृमिरुत्पद्यते तत्र प्रायश्चित्तं कथं भवेत् ३८-
१ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ३८-२ त्र्यहं स्नात्वा च
पीत्वा च कृमिदष्टः शुचिर्भवेत् ३९-१ शुनोपहतः सचेलोऽवगाहेत
३९-२ प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्यपादौ चाचम्य
प्रयतो भवति ४० अथाप्युदाहरन्ति ४१-१ शुना दष्टस्तु यो विप्रो नदीं

गत्वा समुद्रगाम् ४१-२ प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ४१-३ सुवर्णरजताभ्यां वा गवां शृङ्गोदकेन वा ४२ नवैश्च कलशैः स्नात्वा सद्य एव शुचिर्भवेत् । इति ४३ ११

अभक्ष्याः पशवो ग्राम्याः १ क्रव्यादाः शकुनयश्च २ तथा कुक्कुटसूकरम् ३ अन्यत्राजाविभ्यः ४ भक्ष्याः श्वाविड्गोधाशशशल्यककच्छपखङ्गाः-खङ्गवर्जाः पञ्च पञ्चनखाः ५ तथर्श्यहरिणपृषतमहिषवराहकुलुङ्गाःकु-लुङ्गवर्जाः पञ्च द्विखुरिणः ६ पक्षिणस्तित्तिर्यकपोतकपिञ्जलवार्ध्राण-समयूरवारणावारणवर्जाः पञ्च विष्किराः ७ मत्स्याः सहस्रदंष्ट्रश्चिलि-चिमोवर्मिबृहच्छिरोमशकर्यरोहितराजीवाः ८ अनिर्दशाहसंधिनीक्षी-रमपेयम् ९ विवत्सान्यवत्सयोश्च १० आविकमौष्ट्रिकमैकशफमपे-यम् ११ अपेयपयःपाने कृच्छ्रोऽन्यत्र गव्यात् १२ गव्ये तु त्रिरात्रमुपवासः १३ पर्युषितंशाकयूषमांससर्पिःशृतधानागुडदधिमधु-सक्तुवर्जम् १४ शुक्तानि तथाजातो गुडः १५ श्रावण्यां पौर्णमास्या-माषाढ्यां वोपाकृत्य तैष्यांमाघ्यां वोत्सृजेयुः । उत्सृजेयुः १६ १२

शुचिमध्वरं देवा जुषन्ते १ शुचिकामा हि देवाः शुचयश्च २-१ तदेशाभिवदति २-२ शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरंशुचिभ्यः २-३ ऋतेन सत्यमृतसाप आयञ्शुचिजन्मानः शुचयःपावकाः । इति २-४ अहतं वाससां शुचि ३ तस्माद्यत्किं चेज्यासंयुक्तं स्यात्सर्वं तदहतैर्वासोभिः कुर्यात् ४ प्रक्षालितोपवा-तान्यक्लिष्टानि वासांसि पत्नीयजमानावृत्विजश्च परिदधीरन् ५ एवं प्रक्रमादूर्ध्वम् ६ दीर्घसोमेषु सत्त्रेषु चैवम् ७ यथासमाम्नातं च ८ यथैतदभिचरणीयेष्विष्ट्यपशुसोमेषु लोहितोष्णीषालोहितवाससश्च-र्त्विजः प्रचरेयुश्चित्रवाससश्चित्रासङ्गावृषाकपाविति च ९ अग्न्याधाने क्षौमाणि वासांसि तेषामलाभे कार्पासिकान्यौर्णानि वा भवन्ति १० मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाद्भिरिति प्रक्षालनम् ११ वासो-वत्तार्प्यवल्कलानाम् १२ वल्कलवत्कृष्णाजिनानाम् १३ न परि-

हितमधिरूढमप्रक्षालितं प्रावरणम् १४ नापल्पूलितं मनुष्यसंयुक्तं देवत्रा युञ्ज्यात् १५ घनाया भूमेरुपघात उपलेपनम् १६ सुषिरायाः कर्षणम् १७ क्लिन्नाया मेध्यमाहृत्य प्रच्छादनम् १८ चतुर्भिः शुध्यते भूमिर्गोभिराक्रमणात्खननाद्दहनादभिवर्षणात् १९ पञ्चमाच् चोपलेपनात्षष्ठात्कालात् २० असंस्कृतायां भूमौ न्यस्तानां तृणानां प्रक्षालनम् २१ परोक्षोपहतानामभ्युक्षणम् २२ एवं क्षुद्रसमिधाम् २३ महतां काष्ठानामुपघाते प्रक्षाल्यावशोषणम् २४ बहूनां तु प्रोक्षणम् २५ दारुमयाणां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनम् २६ उच्छिष्टलेपोपहतानामवतक्षणम् २७ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः २८ तदेतदन्यत्र निर्देशात् २९ यथैतदग्निहोत्रे घर्मोच्छिष्टे च दधिघर्मे चकुण्डपायिनामयने चोत्सर्गिणामयने च दाक्षायणयज्ञेचेडादधे च चतुश्चक्रे च ब्रह्मौदनेषु चतेषु सर्वेषु दर्भैरद्भिः प्रक्षालनम् ३० सर्वेष्वेव सोमभक्षेष्वद्भिरेव मार्जालीये प्रक्षालनम् ३१ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ३२ १३

मृन्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवकूलनम् १ उच्छिष्टलेपोपहतानां पुनर्दहनम् २ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः ३ तैजसानां पात्राणां पूर्ववत्परिमृष्टानां प्रक्षालनम् ४ परिमार्जनद्रव्याणि गोशकृन्मृद्भस्मेति ५ मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनर्करणम् ६ गोमूत्रे वा सप्तरात्रं परिशायनं महानद्यां वा ७ एवमश्ममयानाम् ८ अलाबुबिल्वविनाडानां गोवालैः परिमार्जनम् ९ नडवेणुशरकुशव्यूतानां गोमयेनाद्भिरिति प्रक्षालनम् १० व्रीहीणामुपघाते प्रक्षाल्यावशोषणम् ११ बहूनां तु प्रोक्षणम् १२ तण्डुलानामुत्सर्गः १३ एवं सिद्धहविषाम् १४ महतां श्ववायसप्रभृत्युपहतानां तं देशंपुरुषान्नमुद्धृत्य । पवमानः सुवर्जन इति । एतेनानुवाकेनाभ्युक्षणम् १५ मधूदके पयोविकारे च पात्रात्पात्रान्तरानयनेशौचम् १६ एवं तैलसर्पिषी उच्छिष्टसमन्वारब्धेउदकेऽवधायोपयोजयेत् १७ अमेध्याभ्याधाने समारोप्याग्निं मथित्वा पवमानेष्टिः १८ शौचदेशमन्त्रावृदर्थद्रव्यसंस्कारका-

लभेदेषुपूर्वपूर्वप्राधान्यम् । पूर्वपूर्वप्राधान्यम् १९ १४

उत्तरत उपचारो विहारः १ तथापवर्गः २ विपरीतं पित्र्येषु ३ पादोपहतं प्रक्षालयेत् ४ अङ्गमुपस्पृश्य सिचं वाप उपस्पृशेत् ५ एवंछेदनभेदनखनननिरसनपित्र्यराक्षसनैर्ऋतरौद्राभिचरणीयेषु ६ न मन्त्रवता यज्ञाङ्गेनात्मानमभिपरिहरेत् ७ अभ्यन्तराणि यज्ञाङ्गानि ८ बाह्यर्त्विजः ९ पत्नीयजमानावृत्विग्भ्योऽन्तरतमौ १० यज्ञाङ्गेभ्य आज्यमाज्याद्धवींषि हविर्भ्यः पशुः पशोःसोमः सोमादग्नयः ११ यथाकर्मर्त्विजो न विहारादभिपर्यावर्तेरन् १२ प्राङ्मुखश्चेद्दक्षिणमंसमभिपर्यावर्तेत १३ प्रत्यङ्मुखः सव्यम् १४ अन्तरेण चात्वालोत्करौ यज्ञस्य तीर्थम् १५ अचात्वाल आहवनीयोत्करौ १६ ततः कर्तारो यजमानः पत्नी च प्रपद्येरन् १७ विसंस्थिते १८ संस्थिते च संचरोऽनुत्करदेशात् १९ नाप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधंवाभ्यादध्यात् २० अग्रेणाहवनीयं ब्रह्मयजमानौ प्रपद्येते २१ जघनेनाहवनीयमित्येके २२ दक्षिणेनाहवनीयं ब्रह्मायतनं तदपरेण यजमानस्य २३ उत्तरां श्रोणिमुत्तरेण होतुः २४ उत्कर आग्नीध्रस्य २५ जघनेन गार्हपत्यं पत्न्याः २६ तेषु कालेकाल एव दर्भान्संस्तृणाति २७ एकैकस्य चोदकमण्डलुरुपात्तः स्यादाचमनार्थः २८ व्रतोपेतो दीक्षितः स्यात् २९ न परपापं वदेन्न क्रुध्येन्न रोदेन्मूत्रपुरीषेनावेक्षेत ३० अमेध्यं दृष्ट्वा जपति । अबद्धं मनो दरिद्रं चक्षुःसूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीरिति ३१ अथ यद्येनमभिवर्षति । उन्दतीर्बलं धत्तौजो धत्तबलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेति ३२ १५

चत्वारो वर्णा ब्राह्मणक्षत्रियविट्शूद्राः १ तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य २ तिस्रो राजन्यस्य ३ द्वे वैश्यस्य ४ एका शूद्रस्य ५ तासु पुत्राः सवर्णानन्तरासु सवर्णाः ६ एकान्तरद्व्यन्तरास्वम्बष्ठोग्रनिषादाः ७ प्रतिलोमास्वायोगवमागधवैणक्षत्तृपुल्कसकुक्कुटवैदेहकचण्डालः ८ अम्बष्ठात्प्रथमायां श्वपाकः ९ उग्राद्द्वितीयायां वैणः

१० निषादात्तृतीयायां पुल्कसः ११ विपर्यये कुक्कुटः १२ निषादेन निषाद्यामा पञ्चमाज् जातोऽपहन्ति शूद्रताम् १३ तमुपनयेत्षष्ठं याजयेत् १४ सप्तमोऽविकृतबीजः समबीजः सम इत्येषां संज्ञाःक्रमेण निपतन्ति १५ त्रिषु वर्णेषु सादृश्यादव्रतो जनयेत्तु यान् १६-१ तान्सावित्री-परिभ्रष्टान्व्रात्यानाहुर्मनीषिणः १६-२ व्रात्यानाहुर्मनीषिण इति १७ १६

रथकाराम्बष्ठसूतोग्रमागधायोगववैणक्षत्तृपुल्कसकुक्कुटवैदेहकच-ण्डालश्वपाकप्रभृतयः १ तत्र सवर्णासु सवर्णाः २ ब्राह्मणात्क्षत्रियायां ब्राह्मणो वैश्यायामम्बष्ठःशूद्रायां निषादः ३ पारशव इत्येके ४ क्षत्रि-याद्वैश्यायां क्षत्रियः शूद्रायामुग्रः ५ वैश्याच्छूद्रायां रथकारः ६ शूद्रा-द्वैश्यायां मागधः क्षत्रियायां क्षत्ताब्राह्मण्यां चण्डालः ७ वैश्यात्क्षत्रि-यायामायोगवो ब्राह्मण्यां वैदेहकः क्षत्रियाद्ब्राह्मण्यां सूतः ८ तत्रा-म्बष्ठोग्रयोः संयोगे भवत्यनुलोमः ९ क्षत्तृवैदेहकयोः प्रतिलोमः १० उग्राज् जातः क्षत्त्र्यां श्वपाकः ११ वैदेहकादम्बष्ठायां वैणः १२ निषदा-च्छूद्रायां पुल्कसः १३ शूद्रान्निषाद्यां कुक्कुटः १४ वर्णसंकरादुत्पन्ना-न्व्रात्यानाहुर्मनीषिणः व्रात्यानाहुर्मनीषिण इति १५ १७

षड्भागभृतो राजा रक्षेत्प्रजाः १ ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधाद-ध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानांगुप्त्यै २ क्षत्रे ब-लमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्यवृद्ध्यै ३ वि-ट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणांवृद्ध्यै ४ शूद्रेषु पूर्वेषां परिचर्याम् ५ पत्तो ह्यसृज्यन्तेति ६ सर्वतोधुरं पुरोहितं वृणुयात् ७ तस्य शासने वर्तेत ८ संग्रामे न निवर्तेत ९ न कर्णिभिर्न दिग्धैः प्रहरेत् १० भीतमत्तोन्मत्तप्रमत्तविसंनाहस्त्रीबालवृद्धब्राह्मणैर्न-युध्येत ११ अन्यत्राततायिनः १२-१ अथाप्युदाहरन्ति १२-२ अध्या-पकं कुले जातं यो हन्यादाततायिनम् १३-१ न तेन भ्रूणहा भवति मन्युस्तन्मन्युमृच्छति इति १३-२ सामुद्रशुल्को वरं रूपमुद्धृत्य दशपणं

शतम् १४ अन्येषामपि सारानुरूप्येणानुपहत्य धर्म्यं प्रकल्पयेत् १५ अब्राह्मणस्य प्रनष्टस्वामिकं रिक्थं संवत्सरंपरिपाल्य राजा हरेत् १६ अवध्यो वै ब्राह्मणः सर्वापराधेषु १७ ब्राह्मणस्यब्रह्महत्यागुरुतल्प-गमनसुवर्णस्तेयसुरापानेषु कुसिन्धभगसृगालसुराध्वजांस्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्धमनम् १८ क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणम्च १९ तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपान्द-ण्डान्प्रकल्पयेत् २० १८

क्षत्रियवधे गोसहस्रमृषभाधिकं राज्ञ उत्सृजेद्वैरनिर्यातनार्थम् १ शतं वैश्ये दश शूद्र ऋषभश्चात्राधिकः २ शूद्रवधेन स्त्रीवधो गोवधश्चव्या-ख्यातोऽन्यत्रात्रेय्या वधाद्धेन्वनडुहोश्च ३ वधे धेन्वनडुहोरन्ते चान्द्रायणं चरेत् ४ आत्रेय्या वधः क्षत्रियवधेन व्याख्यातः ५ हंसभासबर्हिण-चक्रवाकप्रचलाककाकोलूकमण्डूकडिड्डिकडेरिकाश्वबभ्रुनकुलादीनां वधे शूद्रवत् ६ लोकसंग्रहणार्थं यथा दृष्टं श्रुतं वा साक्षीसाक्ष्यं ब्रूयात् ७-१ पादोऽधर्मस्य कर्तारं पादो गच्छति साक्षिणम् ७-२ पादः सभासदः सर्वान्पादो राजानमृच्छति ८-१ राजा भवत्यनेनाश्च मुच्यन्ते च सभासदः ८-२ एनो गच्छति कर्तारं यत्र निन्द्यो ह निन्द्यते ९ साक्षिणं चैवमुद्दिष्टं यत्नात्पृच्छेद्विचक्षणः १०-१ यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि १०-२ एतयोरन्तरा यत्ते सुकृतं सुकृतं भवेत् २ ए तत्सर्वं राजगामि स्यादनृतं ब्रुवतस्तव ११-१ त्रीनेव च पितॄन्हन्ति त्रीनेव च पितामहान् ११-२ सप्त जातानजातांश्च साक्षी साक्ष्यं मृषा वदन् १२-१ हिरण्यार्थे अनृते हन्ति त्रीनेव च पितामहान् १२-२ पञ्च पश्वनृते हन्ति दश हन्ति गवानृते १२-३ शतमश्वानृते हन्ति सहस्रं पुरुषानृते १३-१ सर्वं भूम्यनृते हन्ति साक्षी साक्ष्यं मृषा वदन् १३-२ चत्वारो वर्णाः पुत्रिणः साक्षिणः स्युरन्यत्रश्रोत्रियराजन्यप्रव्रजितमा-नुष्यहीनेभ्यः १३-३ स्मृतौ प्रधानतः प्रतिपत्तिः १४ अतोऽन्यथा कर्तपत्यम् १५ द्वादशरात्रं तप्तं पयः पिबेत्कूश्माण्डैर्वाजुहुयादिति । कूश्माण्डैर्वा जुहुयादिति १६ १९

अष्टौ विवाहाः १ श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने दीयते स ब्राह्मः २ आच्छाद्यालंकृत्य । एषा सह धर्मश्चर्यतामिति । प्राजापत्यः ३ पूर्वां लाजाहुतिं हुत्वा गोभ्यां सहार्षः ४ दक्षिणासु नीयमानास्व-न्तर्वेद्यृत्विजे स दैवः ५ धनेनोपतोष्यासुरः ६ सकामेन सकामाया मिथः संयोगो गान्धर्वः ७ प्रसह्य हरणाद्राक्षसः ८ सुप्तां मत्तां प्रमत्तां वोपगच्छेदिति पैशाचः ९ तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वःश्रेयान् १० उत्तरेषामुत्तर उत्तरः पापीयान् ११ अत्रापि षष्ठसप्तमौ क्षत्रधर्मानुगतौतत्प्रत्ययत्वात्क्षत्रस्य १२ पञ्चमाष्टमौ वैश्यशूद्राणाम् १३ अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति १४ कर्षणशुश्रूषाधिकृतत्वात् १५ गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात् १६ २०

यथा युक्तो विवाहस्तथा युक्ता प्रजा भवतीतिविज्ञायते १-१ अथाप्युदाहरन्ति १-२ क्रीता द्रव्येण या नारी सा न पत्नी विधीयते २-१ सा न दैवे न सा पित्र्ये दासीं तां काश्यपोऽब्रवीत् २-२ शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः ३-१ आत्मविक्रयिणः पापा महा-किल्बिषकारकाः ३-२ पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम् ३-३ गमनागमनं चैव सर्वं शुल्के विधीयते ४-१ पौर्णमस्यष्टकामा-वास्याग्न्युत्पातभूमिकम्पश्मशानदेशपतिश्रोत्रियैकतीर्थप्रयाणेष्वहोरात्र मनध्यायः ४-२ वाते पूतिगन्धे नीहारे चनृत्तगीतवादित्ररुदितसामश-ब्देषु तावन्तं कालम् ५ स्तनयित्नुवर्षविद्युत्संनिपाते त्र्यहमनध्या-योऽन्यत्रवर्षाकालात् ६ वर्षाकालेऽपि वर्षवर्जमहोरात्रयोश्च तत्कालम् ७ पित्र्यप्रतिग्रहभोजनयोश्च तद्दिवसशेषम् ८ भोजनेष्वा जरणम् ९ पाणिमुखो हि ब्राह्मणः १० अथाप्युदाहरन्ति ११-१ भुक्तं प्रतिगृहीतं च निर्विशेषमिति श्रुतिः ११-२ पितर्युपरते त्रिरात्रम् १२ द्वयमु ह वै सुश्रवसोऽनूचानस्य रेतोब्राह्मणस्योर्ध्वं नाभेरधस्तादन्यत् । स यदूर्ध्वं नाभेस्तेन हैतत्प्रजायते यद्ब्राह्मणानुपनयति यदध्यापयति यद्याजयति यत्साधु करोति । सर्वास्यैषा प्रजा भवति । अथ यदवाचीणं नाभेस्तेन हास्याउरसी प्रजा भवति । तस्माच्छ्रोत्रियमनूचानमप्रजोऽसीति न

वदन्ति १३ तस्माद्द्व्यनामा द्व्यमुखो विप्रो द्व्यरेता द्व्यजन्मा चेति १४ शूद्रापपात्रश्रवणसंदर्शनयोश्च तावन्तं कालम् १५ नक्तं शिवाविरावे नाधीयीत स्वप्नान्तम् १६ अहोरात्रयोश्च संध्ययोः पर्वसु च नाधीयीत १७ न मांसमश्नीयान्न स्त्रियमुपेयात् १८ पर्वसु हि रक्षःपिशाचा व्यभिचारवन्तो भवन्तीतिविज्ञायते १९ अन्येषु चाद्भुतोत्पातेष्वहोरात्र-मनध्यायोऽन्यत्रमानसात् २० मानसेऽपि जननमरणयोरनध्यायः २१ अथाप्युदाहरन्ति २२-१ हन्त्यष्टमी ह्युपाध्यायं हन्ति शिष्यं चतुर्दशी २२-२ हन्ति पञ्चदशी विद्यां तस्मात्पर्वणि वर्जयेत् २२-३ तस्मात्पर्वणि वर्जयेदिति २३ २१

अथातः प्रायश्चित्तानि १ भ्रूणहा द्वादश समाः २ कपाली खट्वाङ्गी गर्दभचर्मवासा अरण्यनिकेतनःश्मशाने ध्वजं शवशिरः कृत्वा कुटीं कारयेत् । तामावसेत् । सप्तागाराणि भैक्षं चरन्स्वकर्माचक्षाणस्तेन प्राणान्धारयेत् । अलब्ध्वोपवासः ३ अश्वमेधेन गोसवेनाग्निष्टुता वा यजेत ४ अश्वमेधावभृथे वात्मानं पावयेत् ५-१ अथाप्युदाहरन्ति ५-२ अमत्या ब्राह्मणं हत्वा दुष्टो भवति धर्मतः ६-१ ऋषयो निष्कृतिं तस्य वदन्त्यमतिपूर्वके ६-२ ए मतिपूर्वं घ्नतस्तस्य निष्कृतिर्नोपलभ्यते ७-१ अपगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने ७-२ कृच्छ्रं चान्द्रायणं चैव लोहितस्य प्रवर्तने ७-३ ए तस्मान्नैवापगुरेत न च कुर्वीत शोणितम् । इति ७ नव समा राजन्यस्य ८ तिस्रो वैश्यस्य ९ संवत्सरं शूद्रस्य १० स्त्रियाश्च ११ ब्राह्मणवदात्रेय्याः १२ गुरुतल्पगस्तप्ते लोहशयने शयीत १३ सूर्मिं वा ज्वलन्तीं श्लिष्येत् १४ लिङ्गं वा सवृषणं परिवास्याञ्जलावाधायदक्षिणाप्रतीच्योर्दिशोरन्तरेण गच्छेदा निपतनात् १५ स्तेनः प्रकीर्य केशान्सैध्रकम्मुसलमादाय स्कन्धेनराजानं गच्छेदनेन मां जहीति । तेनैनं हन्यात् १६ अथाप्युदाहरन्ति १७-१ स्कन्धेनादाय मुसलं स्तेनो राजानमन्वियात् १७-२ अनेन शाधि मां राजन्क्षत्रधर्ममनुस्मरन् १७-३ शासने वा विसर्गे वा स्तेनो मुच्येत किल्बिषात् १७-४ अशासनात्तु तद्राजा स्तेनादाप्नोति किल्बिषम् ।

इति १८-१ सुरां पीत्वोष्णया कायं दहेत् १८-२ अमत्या पाने कृच्छ्रा-ब्दपादं चरेत्पुनरुपनयनं च १९ वपनव्रतनियमलोपश्च पूर्वानुष्ठितत्वात् २० अथाप्युदाहरन्ति २१-१ अमत्या वारुणीं पीत्वा प्राश्य मूत्रपुरीषयोः २१-२ ब्राह्मणः क्षत्रियो वैश्यः पुनःसंस्कारमर्हति २२-१ सुराधाने तु यो भाण्डे अपः पर्युषिताः पिबेत् २२-२ शङ्खपुष्पीविपक्वेन षडहं क्षीरेण वर्तयेत् २३-१ गुरुप्रयुक्तश्चेन्म्रियेत गुरुस्त्रीन्कृच्छ्रांश्चरेत् २३-२ एतदेवासंस्कृते २४ ब्रह्मचारिणः शवकर्मणा व्रतावृत्तिरन्यत्रमातापि-त्रोराचार्याच्च २५ स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषज्यार्थेसर्वं प्राश्नीयात् २६ येनेच्छेत्तेन चिकित्सेत् २७ स यदा गदी स्यात्तदुत्था-यादित्यमुपतिष्ठेत । हंसः शुचिषदिति । एतया २८ दिवा रेतः सिक्त्वा त्रिरपो हृदयंगमाः पिबेद्रेतस्याभिः २९ यो ब्रह्मचारी स्त्रियमु-पेयात्सोऽवकीर्णी ३० स गर्दभं पशुमालभेत ३१ नैर्ऋतः पशुः पुरो-डाशश्च रक्षोदेवतोयमदेवतो वा ३२ शिश्नात्प्राशित्रमप्स्ववदानैश्चर-न्तीति विज्ञायते ३३ अपि वामावास्यायां निश्यग्निमुपसमाधायदा-र्विहोमिकीं परिचेष्टां कृत्वा द्वे आज्याहुतीजुहोति । कामावकीर्णो-ऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा । कामाभिद्रुग्धोऽस्म्यभि-द्रुग्धोऽस्मि काम कामाय स्वाहेति ३४ हुत्वा प्रयताञ्जलिः कवाति-र्यङ्ङग्निमभिमन्त्रयेत । सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । संमाऽयमग्निः सिञ्चत्वायुषा च बलेन चायुष्मन्तं करोत मेति ३५ अथास्य ज्ञातयः परिषद्युदपात्रंनिनयेयुरसावहमित्थंभूत इति । चरि-त्वाऽपः पयो घृतं मधुलवणमित्यारब्धवन्तं ब्राह्मणा ब्रूयुश्चरितं त्वयेति । ओमितीतरः प्रत्याह । चरितनिर्वेशं सवनीयं कुर्युः ३६ सगोत्रां चेदमत्योपगच्छेन्मातृवदेनांबिभृयात् ३७ प्रजाता चेत्कृच्छ्राब्दपादं चरित्वा । यन्मआत्मनो मिन्दाभूत् । पुनरग्निश्चक्षुरदादिति । एताभ्यां जुहुयात् ३८ परिवित्तः परिवेत्ता या चैनं परिविन्दति ३९ सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ४०-१ परिवित्तः परिवेत्ता दाता यश्चापि याजकः ४०-२ कृच्छ्रद्वादशरात्रेण स्त्री त्रिरात्रेण शुध्यति । इति ४१ १

अथ पतनीयानि १ समुद्रसंयानम् २ ब्रह्मस्वन्यासापहरणम् ३ भूम्यनृतम् ४ सर्वपण्यैर्व्यवहरणम् ५ शूद्रसेवनम् ६ शूद्राभिजननम् ७ तदपत्यत्वं च ८ एतेषाम् अन्यतमं कृत्वा ९ चतुर्थकाला मितभोजिनः स्युरपोऽभ्यवेयुः सवनानुकल्पम् १०-१ स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपघ्नन्ति पापम् १०-२ यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणःसेवमानः ११-१ चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्तिपापम् । इति ११-२ अथोपपातकानि १२ अगम्यागमनं गुर्वीसखीं गुरुसखीमपपात्रां पतितांच गत्वा भेषजकरणं ग्रामयाजनं रङ्गोपजीवनंनाट्याचार्यता गोमहिषीरक्षणं यच् चान्यदप्येवंयुक्तंकन्यादूषणमिति १३ तेषां तु निर्वेशः पतितवृत्तिर्द्वौ संवत्सरौ १४ अथाशुचिकराणि १५ द्यूतमभिचारोऽनाहिताग्नेरुञ्छवृत्तिता समावृत्तस्यभैक्षचर्या तस्य चैव गुरुकुले वास ऊर्ध्वं चतुर्भ्यो मासेभ्यस्तस्य चाध्यापनं नक्षत्रनिर्देशश्चेति १६ तेषां तु निर्वेशो द्वादश मासान्द्वादश अर्धमासान्द्वादश द्वादशाहान्द्वादश षडहान्द्वादश त्र्यहान्द्वादशाहंषडहं त्र्यहमहोरात्रमेकाहमिति यथा कर्माभ्यासः १७ अथ पतिताः समवसाय धर्मांश्चरेयुरितरेतरयाजकाइतरेतराध्यापका मिथो विवहमानाः पुत्रान्संनिष्पाद्य ब्रूयुर्विप्रव्रजतास्मत्त एवमार्यान्संप्रतिपत्स्यथेति १८ अथापि न सेन्द्रियः पतति १९ तदेतेन वेदितव्यम् । अङ्गहीनोऽपि साङ्गंजनयेत् २० मिथ्यैतदिति हारीतः २१ दधिधानीसधर्माः स्त्रियः स्युः । यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तच्छिष्टा धर्मकृत्येषूपयोजयन्ति २२ एवमशुचि शुक्रं यन्निर्वर्तते न तेन सह संप्रयोगो विद्यते २३ अशुचिशुक्रोत्पन्नानां तेषामिच्छतां प्रायश्चित्तिः २४ पतनीयानां तृतीयोऽअः स्त्रीणामंशस्तृतीयः २५-१ अथाप्युदाहरन्ति २५-२ भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः २६-१ श्वविष्ठायां कृमिर्भूत्वा पितृभिः सहमज्जति । इति २६-२ पितृन्वा एष विक्रीणीते यस्तिलान्विक्रीणीते । प्राणान्वा एष विक्रीणीते यस्तण्डुलान्विक्रीणीते । सुकृतांशान्वा एषविक्रीणीते यः पणमानो दुहितरं ददाति २७ तृणकाष्ठम् अविकृतं विक्रेयम् २८-१ अथाप्युदाहरन्ति २८-२ पश-

वश्चैकतोदन्ता अश्मा च लवणोद्धृतः २९-१ एतद्ब्राह्मण ते पण्यं तन्तुश्चारजनीकृतः । इति २९-२ पातकवर्जं वा बभ्रुं पिङ्गलां गां रोमशांसर्पिषावसिच्य कृष्णैस्तिलैरवकीर्यानूचानाय दद्यात् ३० कूश्माण्डैर्वा द्वादशाहम् ३१ यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यत इति ३२ पातकाभिशंसने कृच्छ्रः ३३ तदब्दोऽभिशंसितुः ३४ संवत्सरेण पतति पतितेन समाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनादिति ३५ अमेध्यप्राशने प्रायश्चित्तिर्नैष्पुरीष्यम् । तत्सप्तरात्रेणावाप्यते ३६ अपः पयो घृतं पराक इति प्रतित्र्यहमुष्णानि सतप्तकृच्छ्रः ३७ त्र्यहं प्रातस्तथा सायम् अयाचितं पराक इति कृच्छ्रः ३८ प्रातः सायमयाचितं पराक इति त्रयश्चतूरात्राः स एषस्त्रीबालवृद्धानां कृच्छ्रः ३९ यावत्सकृदाददीत तावदश्नीयात्पूर्ववत्सोऽतिकृच्छ्रः ४० अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ४१ कृच्छ्रे त्रिषवणमुदकोपस्पर्शनम् ४२ अधःशयनम् ४३ एकवस्त्रता केशश्मश्रुलोमनखवापनम् ४४ एतदेव स्त्रियाः केशवपनवर्जम् । केशवपनवर्जम् ४५
२

नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायीवृषलान्नवर्जी १ ऋतौ च गच्छन्विधिवच् च जुह्वन्न ब्राह्मणश्चयवतेब्रह्मलोकात् २-१ मनुः पुत्रेभ्यो दायं व्यभजदिति श्रुतिः २-२ समशः सर्वेषामविशेषात् ३ वरं वा रूपमुद्धरेज् ज्येष्ठः ४ तस्माज् ज्येष्ठं पुत्रं धनेन निरवसाययन्तीति श्रुतिः ५ दशानां वैकमुद्धरेज् ज्येष्ठः ६ सममितरे विभजेरन् ७ पितुरनुमत्या दायविभागः सति पितरि ८ चतुर्णां वर्णानां गोऽश्वाजावयो ज्येष्ठांशः ९ नानावर्णस्त्रीपुत्रसमवाये दायं दशांशान्कृत्वाचतुरस्त्रीन्द्वावेकमिति यथाक्रमं विभजेरन् १० औरसे तूत्पन्ने सवर्णास्तृतीयांशहराः ११ सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान्स ज्येष्ठांशं हरेत् १२ गुणवान्हि शेषाणां भर्ता भवति १३-१ सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रंविद्यात् १३-२ अथाप्युदाहरन्ति १४-१ अङ्गादङ्गात्संभवसि हृदयादधि जायसे १४-२ आत्मा वै पुत्रनामासि स जीव शरदः शतम

। इति १४-३ अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रमन्यं दौहित्रम् १५ १६-१ अथाप्युदाहरन्ति १६-२ आदिशेत्प्रथमे पिण्डे मातरं पुत्रिका-सुतः १६-३ द्वितीये पितरं तस्यास्तृतीये च पितामहम् । इति १७-१ मृतस्य प्रसूतो यः क्लीबव्याधितयोर्वान्येनानुमते स्वे क्षेत्रे स क्षेत्रजः १७-२ स एष द्व्यपिता द्व्यगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति १८-१ अथाप्युदाहरन्ति १८-२ द्व्यपितुः पिण्डदानं स्यात्पिण्डेपिण्डे च नामनी १९-१ त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्वन्न मुह्यति । इति १९-२ मातापितृभ्यां दत्तोऽन्यतरेण वा योऽपत्यार्थेपरिगृह्यते स दत्तः २० सदृशं यं सकामं स्वयं कुर्यात्स कृत्रिमः २१ गृहे गूढोत्पन्नोऽन्ते ज्ञातो गूढजः २२ मातापितृभ्यामुत्सृष्टोऽन्यतरेण वा योऽपत्यार्थेपरि-गृह्यते सोऽपविद्धः २३ असंस्कृतामनतिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीनः २४ या गर्भिणी संस्क्रियते विज्ञाता वाविज्ञाता वा तस्यांयो जातः स सहोढः २५ मातापित्रोर्हस्तात्क्रीतोऽन्यतरेण वा योऽपत्यार्थेपरिगृह्यते स क्रीतः २६ क्लीबं त्यक्त्वा पतितं वा यान्यं पतिं विन्देत्तस्यांपुनर्भ्वां यो जातः स पौनर्भवः २७ मातापितृविहीनो यः स्वयमात्मानं दद्यात्स स्वयंदत्तः २८ द्विजातिप्रवराच्छूद्रायां जातो निषादः २९ कामात्पारशव इति पुत्राः ३०-१ अथाप्युदाहरन्ति ३०-२ औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ३१-१ गूढजं चापविद्धं च रिक्थभाजः प्रचक्षते ३१-२ कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ३२-१ स्वयंदत्तं निषादं च गोत्रभाजः प्रचक्षते ३२-२ तेषां प्रथम एवेत्याहाउपजङ्घनिः ३३-१ इदानीमहमीर्ष्यामि स्त्रीणां जनक नो पुरा ३३-२ यतो यमस्य सदने जनयितुः पुत्रमब्रुवन् ३४-१ रेतोधाः पुत्रं नयति परेत्य यमसादने ३४-२ तस्मात्स्वभार्यां रक्षन्तु बिभ्यतः पर-रेतसः ३५-१ अप्रमत्ता रक्षत तन्तुमेतं मा वः क्षेत्रेपरबीजानि वाप्सुः ३५-२ जनयितुः पुत्रो भवति सांपराये मोघंवेत्ता कुरुते तन्तुमेतम् । इति ३६-१ तेषामप्राप्तव्यवहाराणामंशान्सोपचयान्सुनिगुप्तान्निदध्युरा व्यवहारप्रापणात् ३६-२ अतीतव्यवहारान्ग्रासाच्छादनैर्बिभृयुः ३७ अन्धजडक्लीबव्यसन्य्व्याधितादींश्च ३८ अकर्मिणः ३९ पतिततत्त्त-

वर्जम् ४० न पतितैः संव्यवहारो विद्यते ४१ पतितामपि तु मातरं बिभृयादनभिभाषमाणः ४२ मातुरलंकारं दुहितरः सांप्रदायिकं लभेरन्नन्यद्वा ४३ न स्त्रियाः स्वातन्त्र्यं विद्यते ४४-१ अथाप्युदाहरन्ति ४४-२ पिता रक्षति कौमारे भर्ता रक्षति यौवने ४५-१ पुत्रस्तु स्थविरीभावे न स्त्रीस्वातन्त्र्यमर्हति । इति ४५-२ निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिः ४६ भर्तृहिते यतमानाः स्वर्गं लोकं जयेरन् ४७ व्यतिक्रमे कृच्छ्रः ४८ शूद्रे चान्द्रायणं चरेत् ४९ वैश्यादिषु प्रतिलोमं कृच्छ्रातिकृच्छ्रादींश्चरेत् ५० पुंसां ब्राह्मणादीनां संवत्सरं ब्रह्मचर्यम् ५१ शूद्रं कटाग्निना दहेत् ५२ अथाप्युदाहरन्ति ५३ ३

अब्राह्मणस्य शारीरो दण्डः संग्रहणे भवेत् १-१ सर्वेषामेव वर्णानां दारा रक्ष्यतमा धनात् १-२ न तु चारणदारेषु न रङ्गावतरे वधः १-३ संसर्जयन्ति ता ह्येतान्निगुप्तांश्चालयन्त्यपि १-४ स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् १-५ मासिमासि रजो ह्यासां दुरितान्यपकर्षति १-६ सोमः शौचं ददौ तासां गन्धर्वः शिक्षितां गिरम् १-७ अग्निश्च सर्वभक्षत्वं तस्मान्निष्कल्मषाः स्त्रियः २-१ अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् २-२ मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ३ संवत्सरं प्रेतपत्नी मधुमांसमद्यलवणानि वर्जयेदधः शयीत ४ षण्मासानिति मौद्गल्यः ५ अत ऊर्ध्वं गुरुभिरनुमता देवराज् जनयेत्पुत्रमपुत्रा ६-१ अथाप्युदाहरन्ति ६-२ वशा चोत्पन्नपुत्रा च नीरजस्का गतप्रजा ७ नाकामा संनियोज्या स्यात्फलं यस्यां न विद्यते । इति ८ मातुलपितृस्वसा भगिनी भागिनेयी स्नुषा मातुलानीसखिवधूरित्यगम्याः ९ अगम्यानां गमने कृच्छ्रातिकृच्छ्रौ चान्द्रायणमितिप्रायश्चित्तिः १० एतेन चण्डालीव्यवायो व्याख्यातः ११ १२ अथाप्युदाहरन्ति १३ चण्डालीं ब्राह्मणो गत्वा भुक्त्वा च प्रतिगृह्य च १४-१ अज्ञानात्पतितो विप्रो ज्ञानात्तु समतां व्रजेत् १४-२ पितुर्गुरोर्नरेन्द्रस्य भार्यां गत्वा प्रमादतः १५-१ गुरुतल्पी भवेत्तेन पूर्वोक्तस्तस्य निष्क्रयः । इति १५-२ अध्यापनयाजनप्रतिग्रहैरशक्तः क्षत्रधर्मेण जीवेत्प्रत्यन-

न्तरत्वात् १६ नेति गौतमः । अत्युग्रो हि क्षत्रधर्मो ब्राह्मणस्य १७-१ अथाप्युदाहरन्ति १७-२ गवार्थे ब्राह्मणार्थे वा वर्णानां वापि संकरे १८-१ गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया १८-२ वैश्यवृत्तिरनुष्ठेया प्रत्यनन्तरत्वात् १९ प्राक् प्रातराशात्कर्षी स्यात् २० अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नारयामुहुर्मुहुरभ्युच्छन्दयन् २१ भार्यादिरग्निः । तस्मिन्कर्मकरणं प्राग् अग्न्याधेयात् २२ अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणमुदगयनदक्षिणायनयोः पशुश्चातुर्मास्यान्यृतुमुखे षड्ढोता वसन्तेज्योतिष्तोम इत्येवं क्षेमप्रापणम् २३ अथाप्युदाहरन्ति २४-१ न दिवास्वप्नशीलेन न च सर्वान्नभोजिना २४-२ कामं शक्यं नभो गन्तुमारूढपतितेन वा २५-१ दैन्यं शाठ्यं जैह्म्यं च वर्जयेत् २५-२ अथाप्यत्रोशनसश्च वृषपर्वणश्च दुहित्रोः संवादेगाथामुदाहरन्ति २६-१ स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः २६-२ अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः २७ ददतोऽप्रतिगृह्णत इति २८ ४

तपस्यमपोवगाहनम् १ देवतास्तर्पयित्वा पितृतर्पणम् २ अनुतीर्थमप उत्सिञ्चति । ऊर्जं वहन्तीरिति ३-१ अथाप्युदाहरन्ति ३-२ स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ४-१ प्रातरुत्थाय कुर्वीरन्देवर्ष्यपितृतर्पणम् ४-२ निरुद्धासु न कुर्वीरन्नंशभाक् तत्र सेतुकृत् ५ तस्मात्परकृतान्सेतून्कूपांश्च परिवर्जयेदिति ६-१ अथाप्युदाहरन्ति ६-२ उद्धृत्य वापि त्रीन्पिण्डान्कुर्यादापत्सु नो सदा ७-१ निरुद्धासु तु मृत्पिण्डान् कूपात्त्रीनब्घटांस्तथा । इति ७-२ बहुप्रतिग्राह्यस्याप्रतिग्राह्यस्य वा प्रतिगृह्यायाज्यं वायाजयित्वानाश्यान्नस्य वान्नमशित्वा तरत्समन्दीयं जपेदिति ८-१ अथाप्युदाहरन्ति ८-२ गुरुसंकरिणश्चैव शिष्यसंकरिणश्च ये ९-१ आहारमन्त्रसंकीर्णा दीर्घं तम उपासते । इति ९-२ अथ स्नातकव्रतानि १० सायं प्रातर्यदशनीयं स्यात्तेनान्नेन वैश्वदेवंबलिमुपहृत्य ब्राह्मणक्षत्रियविट्शूद्रानभ्यागतान्यथाशक्तिपूजयेत् ११ यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्यात् १२ यो वा प्रथममुपगतः

स्यात् १३ शूद्रश्चेदागतस्तं कर्मणि नियुञ्ज्यात् १४ श्रोत्रियाय वाग्रं दद्यात् १५ ये नित्या भाक्तिकाः स्युस्तेषामनुपरोधेन संविभागो विहितः १६ न त्वेव कदाचिददत्त्वा भुञ्जीत १७-१ अथाप्यत्रान्नगीतौ श्लोका-वुदाहरन्ति १७-२ यो मामदत्त्वा पितृदेवताभ्योभृत्यातिथीनां च सुहृ-ज्जनस्य १८-१ संपन्नमश्नन्विषमत्ति मोहात्तमद्म्यहं तस्य चमृत्युरस्मि १८-२ हुताग्निहोत्रः कृतवैश्वदेवः पूज्यातिथीन्भृत्यजनावशिष्टम् १८-३ तुष्टः शुचिः श्रद्दधदत्ति यो मां तस्यामृतं स्यांस च मां भुनक्ति १९-१ सुब्राह्मणश्रोत्रियवेदपारगेभ्योगुर्वर्थनिवेशाउषधार्थवृत्त्यृक्षीणयक्ष्य-माणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो यथाशक्ति कार्यो बहिर्वेदिभिक्षमाणेषु १९-२ कृतान्नमितरेषु २० सुप्रक्षालितपादपाणि-राचान्तः शुचौ संवृते देशेऽन्नमुपहृतमुपसंगृह्य कामक्रोधद्रोहलोभमो-हानपहत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन्प्राश्नीयात् २१ ५

न पिण्डशेषं पात्र्यामुत्सृजेत् १ मांसमत्स्यतिलसंसृष्टप्राशनेऽप उप-स्पृश्याग्निमभिमृशेत् २ अस्तमिते च स्नानम् ३ पालाशमासनं पादुके दन्तधावनमिति वर्जयेत् ४ नोत्सङ्गेऽन्नं भक्षयेत् ५ आसन्द्यां न भुञ्जीत ६ वैणवं दण्डं धारयेद्रुक्मकुण्डले च ७ पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत् ८ न बहिर्मालां धारयेत् ९ सूर्यमुदयास्तमये न निरीक्षेत १० नेन्द्रधनुरिति परस्मै प्रब्रूयात् ११ यदि ब्रूयान्मण्यधनुरित्येव ब्रूयात् १२ पुरद्वारीन्द्रकीलपरिघावन्तरेण नातीयात् १३ प्लेङ्खयोरन्तरेण न ग-च्छेत् १४ वत्सतन्तीं च नोपरि गच्छेत् १५ भस्मास्थ्यरोम-तुषकपालापस्नानानि नाधितिष्ठेत् १६ गां धयन्तीं न परस्मै प्रब्रूयात् १७ नाधेनुमधेनुरिति ब्रूयात् १८ यदि ब्रूयाद्धेनुं भव्येत्येव ब्रूयात् १९ शुक्ता रूक्षाः परुषा वाचो न ब्रूयात् २० नैकोऽध्वानं व्रजेत् २१ न पतितैर्न स्त्रिया न शूद्रेण २२ न प्रतिसायं व्रजेत् २३ न नग्नः स्नायात् २४ न नक्तं स्नायात् २५ न नदीं बाहुकस्तरेत् २६ न कूपमवेक्षेत २७ न गर्तमवेक्षेत २८ न तत्रोपविशेद्यत एनमन्य उत्थापयेत् २९-१ पन्था देयो ब्राह्मणाय गवे राज्ञे ह्यचक्षुषे २९-२ वृद्धाय भारतप्ताय

गर्भिरायै दुर्बलाय च ३०-१ प्रभूतैधोदकयवससमित्कुशमाल्योपनि-ष्क्रमरामाढ्यजनाकुलमनलससमृद्धमार्यजनभूयिष्ठमदस्युप्रवेश्यं ग्राममावसितुं यतेत धार्मिकः ३०-२ उदपानोदके ग्रामे ब्राह्मणो वृष-लीपतिः ३१-१ उषित्वा द्वादश समाः शूद्रसाधर्म्यमृच्छति ३१-२ पुररेणुकुरिठतशरीरस्तत्परिपुर्णनेत्रवदनश्च ३२-१ नगरे वसन्सुनियता-त्मा सिद्धिमवाप्स्यतीति न तदस्ति ३२-२ रथाश्वगजधान्यानां गवां चैव रजः शुभम् ३३-१ अप्रशस्तं समूहन्याः श्वाजाव्य्खरवाससाम् ३३-२ पूज्यान्पूजयेत् ३४-१ ऋष्य्विद्वन्नृपवरमातुलश्वशुरर्त्विजः ३५-१ एतेऽर्घ्याः शास्त्रविहिताः स्मृताः कालविभागशः ३५-२ ऋष्य्वि-द्वन्नृपाः प्राप्ताः क्रियारम्भे वरर्त्विजौ ३६ मातुलश्वशुरौ पूज्यौ संवत्सरग-तागतौ इति ३७ अग्न्यगारे गवां मध्ये ब्राह्मणानां च संनिधौ ३८ स्वाध्याये भोजने चैव दक्षिणं बाहुमुद्धरेत् ३९-१ उत्तरं वासः कर्तव्यं पञ्चस्वेतेषु कर्मसु ३९-२ स्वाध्यायोत्सर्गदानेषु भोजनाचामयोस् तथा ४०-१ हवनं भोजनं दानमुपहारः प्रतिग्रहः ४०-२ बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ४१-१ अन्ने श्रितानि भूतानि अन्नं प्राणमिति श्रुतिः ४१-२ तस्मादन्नं प्रदातव्यमन्नं हि परमं हविः ४२-१ हुतेन शाम्यते पापं हुतमन्नेन शाम्यति ४२-२ अन्नं दक्षिणया शान्तिमुपयातीति न श्रुतिः ४३ उपयातीति नः श्रुतिरिति ४४ ६

अथातः संध्योपासनविधिं व्याख्यास्यामः १ तीर्थं गत्वाप्रयतोऽभि-षिक्तः प्रयतो वानभिषिक्तःप्रक्षालितपादपाणिरप आचम्य सुरभिमत्या-ब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्चप-वित्रैरात्मानं प्रोक्ष्य प्रयतो भवति २-१ अथाप्युदाहरन्ति २-२ अपोवगाहनं स्नानं विहितं सार्ववर्णिकम् ३-१ मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते । इति ३-२ सर्वकर्मणां चैवारम्भेषु प्राक् संध्योपासनकालाच्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति ४ अथाप्युदाहरन्ति । दर्भेष्वासीनो दर्भान्धारयमाणःसोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेत् ५ प्राणायामशो वा शत-

कृत्वः ६ उभयतःप्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः ७ त्रिभिश्च प्राणायामैस्तान्तो ब्रह्महृदयेन ८ वारुणीभ्यां रात्रिमुपतिष्ठते । इमं मे वरुण । तत्त्वायामीति । द्वाभ्याम् ९ एवमेव प्रातः प्राङ्मुख-स्तिष्ठन् १० मैत्रीभ्यामहरुपतिष्ठते । मित्रस्य चर्षणीधृतः । मित्रोज-नान्यातयतीति । द्वाभ्याम् ११ सुपूर्वामपि पूर्वामुपक्रम्योदित आदित्ये समाप्नुयात् १२ अनस्तमित उपक्रम्य सुपश्चादपि पश्चिमाम् १३ संध्य-योश्च संपत्तावहोरात्रयोश्च संतत्यै १४-१ अपि चात्र प्रजापतिगीतौ श्लो-कौ भवतः १४-२ अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् १५-१ संध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः १५-२ सायं प्रातः सदा संध्यां ये विप्रा नो उपासते १५-३ कामं तान्धार्मिको राजा शूद्रकर्मसु योजयेद् । इति १६-१ तत्र सायमतिक्रमे रात्र्युपवासः-प्रातरतिक्रमेऽहरुपवासः १६-२ स्थानासनफलमवाप्नोति १७-१ अथाप्युदाहरन्ति १७-२ यदुपस्थकृतं पापं पद्भ्यां वा यत्कृतं भवेत् १७-३ बाहुभ्यां मनसा वापि वाचा वा यत्कृतं भवेत् १८-१ एश्सायं संध्यामुपस्थाय तेन तस्मात्प्रमुच्यते १८-२ रात्र्या चापि संधीयते न चैनं वरुणो गृह्णाति १९ एवमेव प्रातरुपस्थाय रात्र्यृकृतात्पापात्प्रमुच्यते २० अह्ना चापि संधीयते मित्रश्चैनं गोपायत्यादित्यश्चैनं स्वर्गं लोक-मुन्नयति २१ स एवमेवाहरहरहोरात्रयोः संधिषूपतिष्ठमानोब्रह्मपूतो ब्रह्मभूतो ब्राह्मणः शास्त्रमनुवर्तमानो ब्रह्मलोकमभिजयतीति विज्ञायते । ब्रह्मलोकमभिजयतीति विज्ञायते २२ ७

अथ हस्तौ प्रक्षाल्य कमण्डलुं मृत्पिण्डं च संगृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षालयते त्रिरात्मानं १ अथ हैके ब्रुवते । श्मशानमापो देवगृहं गोष्ठं यत्र चब्राह्मणा अप्रक्षाल्य पादौ तन्न प्रवेष्टव्यमिति २-१ अथापोऽभिप्रपद्यते २-२ हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ३-१ यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ३-२ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ३-३ तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तुपुनःपुनः । इति ३-४ अथाञ्जलिनाप उपहन्ति ।

सुमित्रा न आप ओषधयः सन्त्विति ४ तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ५ अथाप उपस्पृश्य त्रिः प्रदक्षिणमुदकमावर्तयति । यदपां क्रुरं यदमेध्यं यदशान्तं तदपगच्छतादिति ६ अप्सु निमज्ज्योन्मज्ज्य ७ नाप्सु सतः प्रयमणं विद्यते न वासःपल्पूलनंनोपस्पर्शनम् ८ यद्युपरुद्धाः स्युरेतेनोपतिष्ठते । नमोऽग्नयेऽप्सुमतेनम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्य इति ९-१ उत्तीर्याचम्याचान्तः पुनराचामेत् ९-२ आपः पुनन्तु पृथिवीं पृथिवी पूतापुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् १०-१ यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वंपुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहेति १०-२ पवित्रे कृत्वाद्भिर्मार्जयति आपो हि ष्ठा मयोभुव इतितिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानःसुवर्जन इति एतेनानुवाकेनमार्जयित्वान्तर्जलगतोऽघमर्षणेन त्रीन्प्राणायामान्धारयित्वोत्तीर्य वासः पीडयित्वा प्रक्षालितोपवातान्यक्लिष्टानि वासांसि परिधायाप आचम्य दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व-आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरम् ११ अथादित्यमुपतिष्ठते । उद्वयं तमसस्परि । उदु त्यम् । चित्रम् । तच् चक्षुर्देवहितम् । य उदगादिति १२ अथाप्युदाहरन्ति । प्रणवो व्याहृतयः सावित्री चेत्येतेपञ्च ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात्पावयन्ति १३ पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरं देवतास्तर्पयति १४ ८

ओम् अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिःसर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणिसाहोरात्राणि समुहूर्तानि तर्पयामि । ओं वसूंश्च तर्पयामि १ ओं पितरोऽर्यमा भगः सविता त्वष्टा वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि दैवतानि सनक्षत्राणिसग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । ओं रुद्रांश्चतर्पयामि २ ओं मित्र इन्द्रो महापितर आपो विश्वे देवा ब्रह्माविष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणिसाहोरात्राणि समुहूर्तानि

तर्पयामि । ओमादित्यांश्च तर्पयामि ३ ओं वसवो वरुणोऽज एकपादहिर्बुध्न्यःपूषाश्विनौ यम इत्येतान्युदग्द्वाराणि दैवतानि सनक्षत्राणिसग्रहाणि साहोरात्राणि समुहूर्तानि तर्पयामि । ओं विश्वान्देवांस्तर्पयामि । ओं साध्यांश्च तर्पयामि ४ ओं ब्रह्माणं तर्पयामि । ओं प्रजापतिं तर्पयामि । ओं चतुर्मुखं तर्पयामि । ओं परमेष्ठिनं तर्पयामि । ओं हिरण्यगर्भंतर्पयामि । ओं स्वयंभुवं तर्पयामि । ओं ब्रह्मपार्षदांस्तर्पयामि । ओं ब्रह्मपार्षदीश्चतर्पयामि । ओमग्निं तर्पयामि । ओं वायुंतर्पयामि । ओं वरुणं तर्पयामि । ओं सूर्यंतर्पयामि । ओं चन्द्रमसं तर्पयामि । ओं नक्षत्राणि तर्पयामि । ओं सद्योजातं तर्पयामि । ओं भूः पुरुषं तर्पयामि । ओं भुवः पुरुषंतर्पयामि । ओं सुवः पुरुषं तर्पयामि । ओं भूर्भुवः सुवः पुरुषंतर्पयामि । ओं भूस्तर्पयामि । ओं भुवस्तर्पयामि । ओं सुवस्तर्पयामि । ओं महस्तर्पयामि । ओं जनस्तर्पयामि । ओं तपस्तर्पयामि । ओं सत्यं तर्पयामि ५-१ ओं भवं देवं तर्पयामि । ओं शर्वं देवम्तर्पयामि । ओमीशानं देवं तर्पयामि । ओं पशुपतिं देवं तर्पयामि । ओं रुद्रंदेवं तर्पयामि । ओमुग्रं देवं तर्पयामि । ओं भीमं देवंतर्पयामि । ओं महान्तं देवं तर्पयामि ५-२ ओं भवस्य देवस्य पत्नीं तर्पयामि । ओं शर्वस्य देवस्यपत्नीं तर्पयामि । ओमीशानस्य देवस्य पत्नीं तर्पयामि । ओंपशुपतेर्देवस्य पत्नीं तर्पयामि । ओं रुद्रस्य देवस्य पत्नींतर्पयामि । ओमुग्रस्य देवस्य पत्नीं तर्पयामि । ओं भीमस्य देवस्यपत्नीं तर्पयामि । ओं महतो देवस्य पत्नीं तर्पयामि ६-१ ओं भवस्य देवस्य सुतं तर्पयामि । ओं शर्वस्य देवस्यसुतं तर्पयामि । ओमीशानस्य देवस्य सुतं तर्पयामि । ओं पशुपतेर्देवस्य सुतं तर्पयामि । ओं रुद्रस्य देवस्य सुतं तर्पयामि । ओमुग्रस्य देवस्य सुतं तर्पयामि । ओं भीमस्य देवस्य सुतं तर्पयामि । ओं महतो देवस्य सुतं तर्पयामि । ओं रुद्रांस्तर्पयामि । ओं रुद्रपार्षदांस्तर्पयामि । ओं रुद्रपार्षदीश्च तर्पयामि ६-२ ओं विघ्नं तर्पयामि । ओं विनायकं तर्पयामि । ओं वीरं तर्पयामि । ओं स्थूलं तर्पयामि । ओं वरदं तर्पयामि । ओं हस्तिमुखं तर्पयामि । ओं वक्रतुण्डं तर्पयामि ।

ओम् एकदन्तं तर्पयामि । ओं लम्बोदरं तर्पयामि । ओं विघ्नपार्ष-दांस्तर्पयामि । ओं विघ्नपार्षदीश्च तर्पयामि ७ ओं सनत्कुमारं तर्पयामि । ओं स्कन्दंतर्पयामि । ओम् इन्द्रं तर्पयामि । ओं षष्ठींतर्पयामि । ओं षरामुखं तर्पयामि । ओं जयन्तं तर्पयामि । ओं विशाखं तर्पयामि । ओं महासेनं तर्पयामि । ओंसुब्रह्मरायं तर्पयामि । ओं स्कन्दपार्षदांस्तर्पयामि । ओं स्कन्दपार्षदीश्च तर्पयामि ८ ओमादित्यं तर्पयामि । ओं सोमं तर्पयामि । ओम् अङ्गारकं तर्पयामि । ओं बुधं तर्पयामि । ओं बृहस्पतिं तर्पयामि । ओं शुक्रं तर्पयामि । ओं शनैश्चरं तर्पयामि । ओं राहुंतर्पयामि । ओं केतुं तर्पयामि ९ ओं केशवं तर्पयामि । ओं नारायणं तर्पयामि । ओं माधवं तर्पयामि । ओं गोविन्दंतर्पयामि । ओं विष्णुं तर्पयामि । ओं मधुसूदनं तर्पयामि । ओं त्रिविक्रमं तर्पयामि । ओं वामनं तर्पयामि । ओं श्रीधरं तर्पयामि । ओं हृषीकेशं तर्पयामि । ओं पद्मनाभंतर्पयामि । ओं दामोदरं तर्पयामि । ओं श्रियं देवीं तर्पयामि । ओं सरस्वतीं देवीं तर्पयामि । ओं पुष्टिं तर्पयामि । ओं तुष्टिं तर्पयामि । ओं गरुत्मन्तं तर्पयामि । ओं विष्णुपार्षदांस्तर्पयामि । ओं विष्णुपार्षदीश्च तर्पयामि १० ओं यमं तर्पयामि । ओं यमराजं तर्पयामि । ओं धर्मं तर्पयामि । ओं धर्मराजंतर्पयामि । ओं कालं तर्पयामि । ओं नीलंतर्पयामि । ओं मृत्युं तर्पयामि । ओं वैवस्वतं तर्पयामि । ओं चित्रं तर्पयामि । ओं चित्रगुप्तं तर्पयामि । ओम् औदुम्बरंतर्पयामि । ओं वैवस्वतपार्षदांस्तर्पयामि । ओं वैवस्वतपार्षदीश्च तर्पयामि ११ ओं भूम्य्देवांस्तर्पयामि । ओं काश्यपम्तर्पयामि । ओमन्तरिक्षं तर्पयामि । ओं विद्यां तर्पयामि। ओं धन्वन्तरिं तर्पयामि । ओं धन्वन्तर्यपार्षदांस्तर्पयामि । ओं धन्वन्तर्यपार्षदीश्च तर्पयामीति १२ अथ निवीती १३-१ ओमृषींस्तर्पयामि । ओं महर्षींस्तर्पयामि । ओं परमर्षींस्तर्पयामि । ओं ब्रह्मर्षींस्तर्पयामि । ओं देवर्षींस्तर्पयामि । ओं राजर्षींस्तर्पयामि । ओं श्रुतर्षींस्तर्पयामि । ओं जनर्षींस्तर्प-यामि । ओं तपर्षींस्तर्पयामि । ओं सत्यर्षींस्तर्पयामि । ओं

सप्तर्षींस्तर्पयामि । ओं काण्डर्षींस्तर्पयामि । ओं ऋषिकांस्तर्पयामि । ओम् ऋष्य्पत्नीस्तर्पयामि । ओम् ऋष्य्पुत्रांस्तर्पयामि । ओम् ऋष्य्पौत्रांस्तर्पयामि १३-२ ओं काण्वं बौधायनं तर्पयामि । ओम् आपस्तम्बं सूत्रकारं तर्पयामि । ओं सत्याषाढंहिरण्यकेशिनं तर्पयामि । ओं वाजसनेयिनं याज्ञवल्क्यम्तर्पयामि । ओम् आश्वलायनं शौनकं तर्पयामि । ओं व्यासं तर्पयामि । ओं वसिष्ठं तर्पयामि १४-१ ओं प्रणवं तर्पयामि । ओं व्याहृतीस्तर्पयामि । ओं सावित्रीं तर्पयामि । ओं गायत्रीं तर्पयामि । ओं छन्दांसि तर्पयामि । ओम् ऋग्वेदं तर्पयामि । ओं यजुर्वेदंतर्पयामि । ओं सामवेदं तर्पयामि । ओमथर्ववेदं तर्पयामि । ओम् अथर्वाङ्गिरसस्तर्पयामि । ओम् इतिहा-सपुराणानितर्पयामि । ओं सर्ववेदांस्तर्पयामि । ओं सर्वदेवजनांस्त-र्पयामि । ओं सर्वभूतानितर्पयामीति १४-२ ६

अथ प्राचीनावीति । ओं पितॄन्स्वधा नमस्तर्पयामि । ओं पिता-महान्स्वधा नमस्तर्पयामि । ओं प्रपितामहान्स्वधा नमस्तर्पयामि । ओं मातृः स्वधानमस्तर्पयामि । ओं पितामहीः स्वधा नमस्तर्पयामि । ओं प्रपितामहीः स्वधा नमस्तर्पयामि । ओं मातामहान्स्वधा नम-स्तर्पयामि । ओं मातुः पितामहान्स्वधा नमस्तर्पयामि । ओं मातुः प्रपितामहान्स्वधानमस्तर्पयामि । ओं मातामहीः स्वधा नमस्तर्पयामि । ओं मातुः पितामहीः स्वधा नमस्तर्पयामि । ओं मातुः प्रपितामहीः स्वधा नमस्तर्पयामि १ ओमाचार्यान्स्वधा नमस्तर्पयामि । ओमाचा-र्यपत्नीः स्वधा नमस्तर्पयामि । ओं गुरून्स्वधानमस्तर्पयामि । ओं गुरुपत्नीः स्वधा नमस्तर्पयामि । ओं सखीन्स्वधा नमस्तर्पयामि । ओं सख्य्पत्नीः स्वधा नमस्तर्पयामि । ओं ज्ञातीन्स्वधानमस्तर्पयामि । ओं ज्ञातिपत्नीः स्वधा नमस्तर्पयामि । ओम् अमात्यान्स्वधा नम-स्तर्पयामि । ओम् अमात्यपत्नीः स्वधा नमस्तर्पयामि । ओं सर्वान्स्वधा नमस्तर्पयामि । ओं सर्वाः स्वधा नमस्तर्पयामीति २ अनुतीर्थमप उत्सिञ्चति ३ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधा

स्थ तर्पयत मे पितॄन् । तृप्यत तृप्यत तृप्यतेति ४ नैकवस्त्रो नार्द्रवासा दैवानि कर्माण्यनुसंचरेत् ५ पितृसंयुक्तानि चेत्येकेषाम् । पितृ-संयुक्तानि चेत्येकेषाम् ६ १०

अथेमे पञ्च महायज्ञाः । तान्येव महासत्त्राणि । देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति १ अहरहः स्वाहाकुर्यादा काष्ठात् । तथैतंदेवयज्ञं समाप्नोति २ अहरहः स्वधाकुर्यादोदपात्रात् । तथैतं-पितृयज्ञं समाप्नोति ३ अहरहर्नमस्कुर्यादा पुष्पेभ्यः । तथैतम्भूतयज्ञं समाप्नोति ४ अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादा मूलफलशाकेभ्यः । तथैतं मनुष्ययज्ञं समाप्नोति ५ अहरहः स्वाध्यायं कुर्यादा प्रणवात् । तथैतंब्रह्मयज्ञं समाप्नोति ६ स्वाध्यायो वै ब्रह्मयज्ञः । तस्य ह वा एतस्यब्रह्मयज्ञस्य वाग् एव जुहूर्मन उपभृच् चक्षुर्ध्रुवा मेधा स्रुवःसत्यमवभृथः स्वर्गो लोक उदयनम् । यावन्तं ह वा इमां वित्त-स्यपूर्णां ददत्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयांसं चाक्षय्यं चाप पुनर्मृत्युं जयतिय एवं विद्वान्स्वाध्यायमधीते । तस्मात्स्वा-ध्यायोऽध्येतव्य इतिहि ब्राह्मणम् ७ अथाप्युदाहरन्ति । स्वभ्यक्तः सुहितः सुखे शयनेशयानो यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति ८ तस्य ह वा एतस्य धर्मस्य चतुर्धा भेदमेक आहुः । अदृष्टत्वात् । ये चत्वार इति । कर्मवादः ९ ऐष्टिकपाशुकसौमिकदार्विहोमाणाम् १०-१ तदेषाभिवदति १०-२ ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ११-१ तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परिदत्तेह सर्वे । इति ११-२ ब्रह्मचारी गृहस्थो वानप्रस्थः परिव्राजक इति १२ ब्रह्मचारी गुरुशुश्रूष्या मरणात् १३ वानप्रस्थो वैखानसशास्त्रसमुदाचारः १४ वैखानसो वने मूलफलाशी तपःशीलः सवनेषूदकमुपस्पृशञ्श्रामणकेनाग्निमाधायाग्राम्यभोजीदेवपितृभूतमनु ष्यर्ष्यपूजकः सर्वातिथिः प्रतिषिद्धवर्जंबैष्कमप्युपयुञ्जीत । न फाल-कृष्टमधितिष्ठेद्ग्रामं च नप्रविशेत् । जटिलश्चीराजिनवासा नातिसां-वत्सरं भुञ्जीत १५ परिव्राजकः परित्यज्य बन्धूनपरिग्रहः प्रव्रजे-

द्यथाविधि १६ अरण्यं गत्वा १७ शिखामुण्डः १८ कौपीनाच्छादनः १९ वर्षास्वेकस्थः २० काषायवासाः २१ सन्नमुसले व्यङ्गारे निवृत्तशरावसंपाते भिक्षेत २२ वाङ्मनःकर्मदण्डैर्भूतानामद्रोही २३ पवित्रं बिभ्रच्छौचार्थम् २४ उद्धृतपरिपूताभिरद्भिरप्कार्यं कुर्वाणः २५ अपविध्य वैदिकानि कर्माण्युभयतः परिच्छिन्ना मध्यमंपदं संश्लिष्यामह इति वदन्तः २६ ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम् २७ तत्रोदाहरन्ति । प्राह्लादिर्ह वै कपिलो नामासुरआस । स एतान्भेदांश्चकार देवैः स्पर्धमानः । तान्मनीषी नाद्रियेत २८ अदृष्टत्वात् । ये चत्वार इति । कर्मवादऐष्टिकपाशुकसौमिकदार्विहोमाणाम् २९-१ तदेषाभ्यनूच्यते २९-२ एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नोकनीयान् ३०-१ तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यतेपापकेन । इति ३०-२ स ब्रूयात् ३१-१ येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान्योन्य्योनौ ३१-२ नावेदविन्मनुते तं बृहन्तं सर्वानुभूम् आत्मानं संपराये । इति ३२-१ इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो नसुतेकरासः ३२-२ त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वतेअप्रजज्ञये । इति ३२-३ प्रजाभिरग्ने अमृतत्वमश्याम् । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजयापितृभ्य इति । एवमृणसंयोगवादिन्योऽसंख्येया भवन्ति ३३-१ त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपोयज्ञमनुप्रदानम् ३३-२ य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वाध्वंसतेऽन्यत्प्रशंसन् । इति ३४-१ ध्वंसतेऽन्यत्प्रशंसन्निति ३४-२ ११

अथ शालीनयायावराणामात्मयाजिनां प्राणाहुतीर्व्याख्यास्यामः १ सर्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुखोपविश्य तद्भूतमाह्रियमाणम् । भूर्भुवः सुवरोमिति । उपस्थाय वाचं यच्छेत् २ न्यस्तमन्नं महाव्याहृतिभिः प्रदक्षिणमुदकं परिषिच्यसव्येन पाणिनाविमुञ्चन् । अमृतोपस्तरणमसीति । पुरस्तादपःपीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति । प्राणे निविष्टोऽमृतंजुहोमि । शिवो मा विशाप्रदाहाय । प्राणाय

स्वाहा । अपानेनिविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा । व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । व्यानायस्वाहा । उदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा । समाने निविष्टोऽमृतं जुहोमि । शिवो माविशाप्रदाहाय । समानाय स्वाहेति ३ पञ्चान्नेन प्राणाहुतीर्हुत्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन् । नान्तरा वाचं विसृजेत् ४ यद्यन्तरा वाचं विसृजेत् । भूर्भुवः सुवरोमिति । जपित्वा पुनरेव भुञ्जीत ५ त्वक्केशनखकीटाखुपुरीषाणि दृष्ट्वा तं देशं पिण्डमुद्धृत्याद्भिरभ्युक्ष्य भस्मावकीर्य पुनरद्भिः प्रोक्ष्य वाचाच प्रशस्तमुपयुञ्जीत ६-१ अथाप्युदाहरन्ति ६-२ आसीनः प्राङ्मुखोऽश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ७-१ अस्कन्दयंस्तन्मनाश्च भुक्त्वा चाग्निमुपस्पृशेद् । इति ७-२ सर्वभक्ष्यापूपकन्दमूलफलमांसानि दन्तैर्नावद्येत् ८ नातिसुहितः ९ अमृतापिधानमसीति । उपरिष्टादपः पीत्वाचान्तोहृदयदेशमभिमृशति । प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः । तेनान्नेनाप्यायस्वेति १०-१ पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणी निस्त्रावयति १०-२ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ११-१ ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् । इति ११-२ हुतानुमन्त्रणमूर्ध्वहस्तः समाचरेत्
श्रद्धायांप्राणे निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्व ।
श्रद्धायामपाने निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्व ।
श्रद्धायांव्याने निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्व ।
श्रद्धायामुदाने निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्व ।
श्रद्धायांसमाने निविश्यामृतं हुतम् । प्राणमन्नेनाप्यायस्वेति । पञ्चभिः १२ ब्रह्मणि म आत्मामृतत्वायेति १३ अक्षरेण चात्मानं योजयेत् १४ सर्वक्रतुयाजिनामात्मयाजी विशिष्यते १५ अथाप्युदाहरन्ति १६ १२

यथा हि तूलमैषीकमग्नौ प्रोतं प्रदीप्यते १ तद्वत्सर्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः २-१ केवलाघो भवति केवलादी । मोघमन्नं विन्दत अप्रचेता इति २-२ स एवमेवाहरहः सायं प्रातर्जुहुयात् ३ अद्भिर्वा

सायम् ४-१ अथाप्युदाहरन्ति ४-२ अग्रे भोजयेदतिथीनन्तर्वत्नीरन-न्तरम् ५-१ बालवृद्धांस्तथा दीनान्व्याधितांश्च विशेषतः ५-२ अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्ते यथाविधि ५-३ भुज्यमानो न जानाति न स भुङ्क्ते स भुज्यते ६-१ पितृदैवतभृत्यानां मातापित्रोर्गुरोस्तथा ६-२ वा-ग्यतो विघसमश्नीयादेवं धर्मो विधीयते । इति ७-१ अथाप्युदाहरन्ति ७-२ अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ७-३ द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ८-१ आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ८-२ अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् । इति ९-१ गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् ९-२ प्राणाग्नि-होत्रलोपेन अवकीर्णी भवेत्तु सः ९-३ अन्यत्र प्रायश्चित्तात् । प्रायश्चित्ते तदेव विधानम् १०-१ अथाप्युदाहरन्ति १०-२ अन्तरा प्रातराशं च सायमाशं तथैव च ११-१ सदोपवासी भवति यो न भुङ्क्ते कदाचन ११-२ प्राणाग्निहोत्रमन्त्रांस्तु निरुद्धे भोजने जपेत् १२-१ त्रेताअग्निहो-त्रमन्त्रांस्तु द्रव्यालाभे यथा जपेत् । इति १२-२ एवमाचरन् ब्रह्मभूयाय कल्पते । ब्रह्मभूयाय कल्पत इति १३ १३

पित्र्यमायुष्यं स्वर्ग्यं यशस्यं पुष्ट्यकर्म च १ त्रिमधुस्त्रिणाचिकेतस्त्रि-सुपर्णः पञ्चाग्निःषडङ्गविच्छीर्षको ज्येष्ठसामकः स्नातक इति पङ्क्त्यपा-वनाः २ तदभावे रहस्यवित् ३ ऋचो यजूंषि सामानीति श्राद्धस्य महिमा । तस्मादेवंविदं सपिण्डमप्याशयेत् ४-१ रक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च ४-२ मध्वृचोऽथ पवित्राणि श्रावयेदाशयञ्शनैः ५ चरणवतोऽनूचानान्योन्यगोत्रमन्त्रासंबद्धाञ्शु-चीन्मन्त्रवतस्त्र्यवरानयुजः पूर्वेद्युः प्रातरेववा निमन्त्र्य सदर्भोपक्ऌप्ते-ष्वासनेषु प्राङ्मुखानुपवेशयत्युदङ्मुखान्वा ६ अथैनांस्तिलमिश्रा अपः प्रतिग्राह्य गन्धैर्माल्यैश्चालंकृत्य । अग्नौ करिष्यामीति । अनुज्ञातोऽग्नि-मुपसमाधायसंपरिस्तीर्याग्निमुखात्कृत्वान्नस्यैव तिस्र आहुतीर्जुहोति । सोमाय पितृपीताय स्वधा नमः स्वाहा । यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा । अग्नयेकव्यवाहनाय स्विष्टकृते स्वधा नमः

स्वाहेति ७ तच्छेषेणान्नमभिघार्यान्नस्यैता एव तिस्रो जुहुयात् ८ वयसां पिण्डं दद्यात् ९ वयसां हि पितरः प्रतिमया चरन्तीति विज्ञायते १० अथेतरत्साङ्गुष्ठेन पाणिनाभिमृशति ११-१ पृथिवीसमन्तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतांप्राणापानयो-र्जुहोम्यक्षितमसि मा पितॄणां क्षेष्ठा अमुत्रामुष्मिंलोक इति ११-२ अन्तरिक्षसमन्तस्य ते वायुरुपश्रोता यजूंषि ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रंद्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वाविद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा पितामहानांक्षेष्ठा अमुत्रामुष्मिं लोक इति १२-१ द्युसमन्तस्य त आदित्योऽनुख्यातासा-मानि ते महिमा दत्तस्य अप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखे जुहोमि ब्राह्मणानां त्वा विद्यावतांप्राणापानयो-र्जुहोम्यक्षितमसि मा प्रपितामहानां क्षेष्ठाअमुत्रामुष्मिं लोक इति १२-२ १४

अथ वै भवति १-१ अग्नौ करणशेषेण तदन्नमभिघारयेत् १-२ निरङ्गुष्ठं तु यद्दत्तं न तत्प्रीणाति वै पितॄन् १-३ उभयोः शाखयोर्मुक्तं पितृभ्योऽन्नं निवेदितम् १-४ तदन्तरमुपासन्ते असुरा दुष्टचेतसः २-१ यातुधानाः पिशाचाश्च प्रतिलुम्पन्ति तद्धविः २-२ तिलदाने ह्यदायाश्च तथा क्रोध-वशेऽसुराः ३-१ काषायवासा यान्कुरुते जपहोमप्रतिग्रहान् ३-२ न तद्देवंगमं भवति हव्यकव्येषुयद्धविः ४-१ यच् च दत्तमनङ्गुष्ठं यच् चैव प्रतिगृह्यते ५ आचामति च यस्तिष्ठन्न स तेन समृध्यते । इति ६ आद्यन्तयोरपां प्रदानं सर्वत्र ७ जयप्रभृति यथाविधानम् ८ शेष-मुक्तमष्टकाहोमे ९-१ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ९-२ भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे १०-१ सत्क्रियां देशकालौ च शौचं ब्राह्मणसंपदम् १०-२ पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ११-१ उरस्तः पितरस्तस्य वामतश्च पितामहाः ११-२ दक्षिणतः प्रपि-तामहाः पृष्ठतः पिण्डतर्ककाः । इति १२ १५

प्रजाकामस्योपदेशः १ प्रजननिमित्ता समाख्येत्यश्विनावूचतुः २-१ आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः २-२ प्रजामुत्पादयेद्युक्तः स्वेस्वे वर्णे जितेन्द्रियः २-३ ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः ३ च्द्तानि मुच्यात्मवान्भवति विमुक्तो धर्मसंशयात् ४-१ स्वाध्यायेन ऋषीन्पूज्य सोमेन च पुरंदरम् ४-२ प्रजया च पितॄन्पूर्वाननृणो दिवि मोदते ५ पुत्रेण लोकाञ् जयति पौत्रेणानन्त्यमश्नुते ६-१ अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहति । इति ६-२ विज्ञायते च । जायमानो वै ब्राह्मणस्त्रिभिर्ऋृणवाजायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति । एवमृणसंयोगं वेदो दर्शयति ७ सत्पुत्रमुत्पाद्यात्मानं तारयति ८ सप्तावरान्सप्त पूर्वान्षड् अन्यानात्मसप्तमान् सत्पुत्रमधिगच्छानस्तारयत्येनसो भयात् ९ तस्मात्प्रजासंतानमुत्पाद्य फलमवाप्नोति १० तस्माद्यत्नवान्प्रजामुत्पादयेत् ११ औषधमन्त्रसंयोगेन १२ तस्योपदेशः श्रुतिसामान्येनोपदिश्यते १३ सर्ववर्णेभ्यः फलवत्त्वादिति । फलवत्त्वादिति १४ १६

अथातः संन्यासविधिं व्याख्यास्यामः १ सोऽत एव ब्रह्मचर्यवान्प्रव्रजतीत्येकेषाम् २ अथ शालीनयायावराणामनपत्यानाम् ३ विधुरो वा प्रजाः स्वधर्मे प्रतिष्ठाप्य वा ४ सप्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति ५ वानप्रस्थस्य वा कर्मविरामे ६-१ एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नोकनीयान् ६-२ तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यतेपापकेन ७ आहवनीयेऽग्निहोत्रपात्राणि प्रक्षिपत्यमृन्मयान्यनश्ममयानि २४ गार्हपत्येऽरणी । भवतं नः समनसाविति २५ आत्मन्यग्नीन्समारोपयते । या ते अग्नेयज्ञिया तनूरिति त्रिस्त्रिरेकैकं समाजिघ्रति २६ अथान्तर्वेदि तिष्ठन् । ओं भूर्भुवः सुवः संन्यस्तंमया संन्यस्तं मया संन्यस्तं मयेति । त्रिरुपांशूक्त्वा त्रिरुच्चैः २७ त्रिषत्या हि देवा इति विज्ञायते २८ अभयं सर्वभूतेभ्यो मत्त इति चापां पूर्णमञ्जलिंनिनयति २९-१ अथाप्युदाहरन्ति २९-२ अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ३०-१ न तस्य सर्वभूतेभ्यो भयं चापीह जायते ।

इति ३०-२ स वाचंयमो भवति ३१ सखा मा गोपायेति दराडमादत्ते ३२ यदस्य पारे रजस इति शिक्यं गृह्णाति ३३ येन देवाः पवित्रेणेति जलपवित्रं गृह्णाति ३४ येन देवा ज्योतिषोर्ध्वा उदायन्निति कमराडलुं गृह्णाति ३५ सप्तव्याहृतिभिः पात्रं गृह्णाति ३६ यष्टयः शिक्यं जलपवित्रं कमराडलुं पात्रमित्येतत्समादाय यत्रापस्तत्र गत्वा स्नात्वाप ग्राचम्य-सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिररायवर्णाभिः पावमानीभिरिति मा-र्जयित्वान्तर्जलगतोऽघमर्षणेन षोडश प्राणायामान्धारयित्वोत्तीर्य वासः पीडयित्वान्यत्प्रयतं वासःपरिधायाप ग्राचम्य । ग्रों भूर्भुवः सुवरिति । जलपवित्रमादाय तर्पयति । ग्रों भूस्तर्पयामि । ग्रों भुवस्तर्पयामि । ग्रोंसुवस्तर्पयामि । ग्रों महस्तर्पयामि । ग्रों जनस्तर्पयामि । ग्रों तपस्तर्पयामि । ग्रों सत्यं तर्पयामीति ३७ देववत्पितृभ्योऽञ्जलिमादाय । ग्रों भूः स्वधा । ग्रों भुवः स्वधा । ग्रों सुवः स्वधा । ग्रोंभूर्भुवः सुवर्महर्नम इति ३८ ग्रथ । उदु त्यम् । चित्रमिति । द्वाभ्यामा-दित्यमुपतिष्ठते ३९ ग्रोमिति ब्रह्म ब्रह्म वा एष ज्योतिर्य एष तपत्येष वेदो य एषतपति वेद्यमेवैतद्य एष तपति । एवमेवैष ग्रात्मानं तर्पयति । ग्रात्मने नमस्करोति । ग्रात्माब्रह्मात्मा ज्योतिः ४० सावित्रीं सह-स्रकृत्व ग्रावर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा ४१ १७

इति बौधायनधर्मसूत्र समाप्तम्

Credits

Sources: 1. Hultzsch, *Das Baudhayana-Dharmasutra.* Zweite, Verbesserte Auflage. Abhandlungen fuer die Kunde des Morgenlandes, 16, Leipzig 1922.

2. Umesa Chandra Pandeya, *Baudhayana-Dharmasutra with the 'Vivarana' Commentary* by Sri Govinda Svami and critical notes by M. M. A. Chinnaswami Sastri, The Kashi Sanskrit Series, 104, Varanasi 1972

Typescript: Typed and Analyzed by Masato Fujii and Mieko Kajihara, proofread by Toru Yagi, under the guidance of Y. Ikari

Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection